संन्यासस्यापि क्वापि विधिः, क्वचिन्निषेधः। एवं देश-कालानुरोधेन कस्यचिद्भावे प्रतिनिधिकल्पनमपि सर्वतान्त्रिकसम्मतम्। "प्रधानस्य न प्रतिनिधिः" इत्यत्र प्राधान्ये विप्रतिपत्तावपि माध्यस्थ्यवृत्त्या निर्वचनेन सा परिहर्तुं शक्यत एव। एवं बहूनां धर्माणां देश-कालानुरोधेन सङ्कोचनरूपं विपरिवर्तनं प्राचीनैरेवाचार्यैः कृतमिति सूक्ष्मेक्षिकया वीक्षमाणानामपरोक्षम्। अत एव कालभेदेन धर्मभेदमाह मनुः—"अन्ये कृतयुगे धर्मास्त्रेतायां द्वापरे परे" इति। तस्मात् सर्वमपि दृष्टफलमदृष्टफलं वा देश-कालावस्थानुरोधेन सङ्कोचनप्रधानं विपरिवर्तितमिति निश्चप्रचम्, अन्यथा हि परस्परविरोधिनां वाक्यानां कथं नाम विरोधः परिह्रियताम्?

अथैवं परिवर्तनं फलपर्यवसायि न वेति विचारयामः। यदि फलपर्यवसायीति ते न व्यचारयिष्यन्, तर्हि न विपर्यवर्तयिष्यन्। अतः शिष्टानां धर्मज्ञानां मतम् काले विपरिवर्तनं फलपर्यवसायीति। किञ्च किमर्थमिदं विपरिवर्त्यते? दृष्टदोषत्वादिति चेत्, विपरिवर्तने तादृशदोषः परिह्रियते, न वा? परिह्रियत इति चेत्, तदैवैकं मुख्यं फलं भवितुमर्हति। न परिह्रियत इति चेत्, तादृशं विपरिवर्तनमेव न कार्यम्, फलासिद्धेः। यदि विपरिवर्तितो धर्मः फलाभावालमिति कुतोऽवगतमिति पृच्छसि, तर्हि अपरिवर्तितो धर्मः फलायालमिति कुतोऽवगतमिति पृच्छामः। शास्त्रादिति चेत्, इदमपि शास्त्रादेव। न खल्वेवंरूपेण पूर्वमनुशिष्टम्? न खल्वेवंरूपा देशकालपरिस्थितिः तदा आसीत्, येनैवं रूपेणान्वशिष्यन्, तर्हि केन रूपेणानुशिष्टमिति चेदुच्यते। "यं शिष्टा ब्राह्मणा ब्रूयुः स धर्मः स्यादशङ्कितः।" एवम्—"धर्मज्ञसमयः प्रमाणम्", इति च। तस्मात् युक्त्या प्राचीनेतिवृत्तगवेषणया युगभेदेन धर्मभेदस्य कण्ठत एवोक्तेश्च सत्यावश्यके तत्तद्देश-कालानुरोधेन शिष्टैर्धर्मज्ञैरयं धर्मोऽयमधर्म इति समयः कर्तव्य एवेति।

"धर्मज्ञसमयः प्रमाणमि"त्यत्र के धर्मज्ञाः? इति प्रश्ने उत्तरम्—धर्मज्ञा आप्ताः, आप्ताश्शिष्टाः। शिष्टा अकामोपहतात्मानः कामाभिभूतस्य वेदविदोऽपि क्वचिद् दृष्टो धर्मव्यतिक्रमः। तस्मात् यस्य धर्मज्ञस्य समयः प्रमाणतया स्वीकरणीयः, तेनाकामाभिभूतेन भाव्यम्। अत एवोक्तं वसिष्ठेन "शिष्टः पुनरकामात्मा" इति। अत्र काम इत्युपलक्षणं क्रोध-लोभ-मोह-मद-मत्सराणाम्। तेभ्योऽपि हि महतामपि साहसं दृष्टम्। यथा रामस्य ताटकादिवधः। जामदग्न्यस्य मातृशिरश्छेदः। धृतराष्ट्रस्य नगराद् युधिष्ठिराद्युद्वासनमित्यादि। तस्मात् निगृहीतारिषड्वर्गः शिष्ट इति। अत एव गौतमः 'दम्भ-लोभ-मोह-वियुक्ताः' इत्याह। अयमेवार्थः धर्मशास्त्रकारैः संग्रहेणोक्तः—"समः सर्वभूतेषु" इति। निगृहीतारिषट्कोऽपि देश-कालविभागानभिज्ञस्तदनुरोधिनं सामुदायिकं धर्मं व्यवस्थापयितुं न प्रभवति। अतस्तदभिज्ञेनापि भाव्यम् धर्मज्ञेन। तद्विज्ञानञ्च श्रुत्यधीनम्, तस्मात् बहुश्रुतः शिष्टः। अत एव श्रुतं धर्माधर्मव्यवस्थापनस्य मूलभूतत्वेन गरीय इति धर्मशास्त्रकाराः। यथाह गौतमः—"श्रुतन्तु सर्वेभ्यो गरीयः"। "तन्मूलत्वाद्धर्मस्य" इति। मनुरपि "धर्मेणाधिगतो यैस्तु वेदः सपरिबृंहणः। ते शिष्टा ब्राह्मणा ज्ञेयाः श्रुतिप्रत्यक्षहेतवः"। बहुश्रुतोऽपि ऊहापोहायसमर्थः समयं कर्तुं न प्रभवति। परस्परस्पर्धिनामनेकेषां श्रुति-स्मृत्यादिवचनानामुत्सर्गापवादभावमेव निर्धारयितुं स न शक्नोति, किमुत धर्मव्यवस्थां कर्तुम्। तस्माद् ऊहापोहकुशलेनापि भाव्यं धर्मज्ञेन, न केवलं बहुश्रुतेन। अयमर्थो धर्मवित्पदं निर्ब्रुवता मनुना प्रदर्शितः "आर्षं धर्मोपदेशञ्च वेदशास्त्राविरोधिना। यस्तर्केणानुसन्धत्ते स धर्मं वेद नेतरः।" इति। तस्मात् बहुश्रुत ऊहापोहकुशलो देशकाल-विभागज्ञोऽकामोऽक्रोधनोऽलोभोऽमोहोऽमदोऽमत्सरश्च धर्मज्ञः, यस्य समयः प्रमाणम्। अत्राकामादयो न धर्मज्ञ-

सामान्यलक्षणे घटकाः, किन्तु यस्य धर्मज्ञस्य समयाः प्रामाण्येन गृह्येरन्, तन्मात्रलक्षणे। सामान्यलक्षणन्तु तदघटितं पूर्वोक्तमेव। अत्र च 'धर्मज्ञसमयः प्रमाणम्' इत्यत्र को धर्मज्ञ इति पृष्टत्वात् समुदितसकललक्षण एव धर्मज्ञ इत्यवधेयम्। तेन च धर्मो व्यवस्थापनीयः।

किमत्र धर्मव्यवस्थापकत्वम्? किं यथा-यथा पूर्वशास्त्रेऽनुशिष्टो धर्मः, तथा तथैव तं व्यवस्थापयन्ति=अंशतोऽपि जायमानमन्यथा भावं निराकृत्य यथाजातमेव गोपायन्तीति, किं वा पूर्वशास्त्राभिप्रायानुरोधेन विशेषेण देश-कालावस्थानुसारिभिः समुचितैः संस्कारैरवस्थापयन्ति=प्रचलनोन्मुखं स्थिरीकुर्वन्तीति? नाद्यः; अंशतोऽपि विभेदमन्तरा तथैव व्यवस्थापनस्य कर्तुमशक्यत्वात्, तथा व्यवस्थापनस्यानावश्यकत्वाच्च, पूर्वानुशासनेनैव गतार्थत्वात्, प्राचीनधर्मशास्त्रकारैस्तथा अव्यवस्थापितत्वाच्च। ते हि क्वचिदृष्टमन्यथा कृतवन्तः क्वचिददृष्टमायोजितवन्त इति विज्ञायते। तस्माद् द्वितीयपक्ष एव श्रेयान्। पूर्वाचार्यैः प्रचलनोन्मुखस्यैव सनातनधर्मस्य रक्षणाय देश-कालावस्थानुरोधेनावापोद्वापाभ्यां सम्यग्व्यवस्थापनस्य कृतत्वात्।

तेषामेतद्धर्मव्यवस्थापकत्वं शास्त्रमनुसृत्योत स्वतन्त्रम्? स्वतन्त्रमेव भवितुमर्हति। यतोऽयं व्यवस्थापनारम्भः प्राचीनममार्गैर्ध्यर्कमप्रापितस्य अभ्युदयसाधनस्य अनभ्युदयनिवारकस्य च विधानाय। अत्रापि पूर्वशास्त्रानुसरणस्य कर्तुमशक्यत्वाद् यदि शास्त्रमनुरुध्यते, तेनैव फलसिद्धेरस्यारम्भस्यैव वैयर्थ्यापातः। शास्त्रानुरोधेन प्रामाण्येऽभ्युपगम्याने, व्यवस्थापने अस्मिन्नविश्वासप्रसङ्गः। तस्मात् धर्मज्ञानां धर्मव्यवस्थापकत्वं स्वतन्त्रमेव। न ह्येतावता स्वतन्त्रैस्तैर्धर्मज्ञैर्वेदविरुद्धोऽपि अनुशिष्येत, उच्छृङ्खलश्च तेषां पन्था अनुमतो भवति इत्याक्षेप्यम्; शिष्टस्यैव नियन्त्रणे

दोषासंभवात्। शिष्टानामनियन्त्रणेऽपि मर्यादानतिलङ्घनस्यैव दृष्टत्वात्। किंच अयं वेदविरुद्धोऽयमविरुद्ध इति निर्धारणे त एवाधिकुर्वन्ति। कथमेवं स्थिते वेदविरुद्धार्थविधानशङ्का नास्थाने भवति? तस्मात् ते वेदतात्पर्यविषयं नानुशिष्युरिति विश्वास एव श्रेयान्।

यत्तैरनुशिष्यते तदनुरोधेन श्रुत्यादिभिर्ध्रुवं नेयार्थैर्भूयेत। अत एव "केवलं शास्त्रमाश्रित्य न कर्त्तव्यो विनिर्णयः। युक्तहीनविचारे तु धर्महानिः प्रजायते"॥ यमोऽपि "एको द्वौ वा त्रयो वापि यं ब्रूयुर्धर्मपालकाः। स धर्म इति विज्ञेयो नेतरेषां सहस्रशः" इति। मनुरपि "अनाम्नातेषु धर्मेषु कथं स्यादिति चेद् भवेत्। यं शिष्टा ब्राह्मणा ब्रूयुः स धर्मः स्यादशङ्कितः॥" इति। एतैः प्रमाणैः केवलं शास्त्रानुसरणं न धर्मिकाणां धर्मव्यवस्थापनौपयिकम्, किन्तु युक्तिरेव मुख्या। तादृशयुक्तिनिर्धारणसामर्थ्यन्तु सततशास्त्रपरिचयसमागतम्। एवं शास्त्रसंस्कृतमतिभिः कृतायां धर्मव्यवस्थायामशङ्कित एव प्रवर्तेत लोक इति स्पष्टमेवाचष्टे मनुः। गोतमोऽप्याह—"यच्चात्मवन्तो वृद्धाः सम्यग्विनीता दम्भ-लोभ-मोहवियुक्ता वेदविद आचक्षते, तत्समाचरेत्" इति। अत एव याज्ञवल्क्येनापि—"श्रुतिः स्मृतिः सदाचार" इत्यनेन श्रुति-स्मृत्योरिव सदाचारस्यापि धर्मप्रमाणत्वेन स्वतन्त्रतयैव परिगणनं कृतम्। मनुरपि वेदविदां स्मृतिं शीलञ्च यथा प्रमाणयति, तथैव स्वातन्त्र्येण आचारमपि प्रमाणयति—"आचारश्चैव साधूनाम्" इत्यादिना। गौतमेनाप्युक्तम् "तद्विदां स्मृति-शीले" इति। अत्र "शीलं मनूपनिबद्धः सदाचारः" इति मस्करी। एतैः प्रमाणैर्धार्मिकाणामाचारस्यापि प्रामाण्यं धर्मे अस्तीत्यत्र नास्ति सन्देहस्यावकाश इत्येव प्रतिपत्तव्यम्, किमुत तेषां धर्मव्यवस्थापनाधिकृतानां तद्व्यवस्थापनैकोद्देशेन कृते धर्मानुशासने। तस्मात्तेषां धर्मव्यवस्थापकत्वं स्वतन्त्रमेवेति। परं त्विदमत्रावधेयम्—शिष्टसंपादनमेव कष्टसाध्यम्,

यत्नतः संपादनेऽपि भ्रम-प्रमादादीनामविज्ञातोपनिपातसंभवात् समयनिर्णये निरुक्तसकललक्षणसमन्वितोऽप्येको न वरम् , परन्तु तेषां परिषद् । अत एव मनुः "परिषत् ज्ञेया धर्मसंशयनिर्णये ॥" इति । अलाभे तु बहूनां परमन्तत एकोऽपि धर्मं व्यवस्थापयितुमर्हतीत्येव मनुराशेते । "एकोऽपि वा वदेद्धर्मं यं व्यवस्यन् द्विजोत्तमः । विज्ञेयः परो धर्मः ।"—इति । इयमुक्तिस्तु एकैकस्य सन्दिग्धार्थस्य तात्कालिके निर्णये । परिवर्तने तु परिषदेवार्हतीति विभावनीयम् ।

कदापि कस्यापि धर्मस्याधर्मस्य वा देश-कालपरिस्थितिमनुसृत्य धर्मज्ञैः परिवर्तनं कृतम्, न वा ? कृतम् । तथाहि गवालम्भादयो पहवः श्रुत्या धर्मत्वेन चोदिताः, पश्चात् ते स्मार्तैर्निषिद्धाः । न केवलं स्मार्तैः कृतो निषेधः, किन्तु ब्राह्मणेऽप्येवं दृश्यते "मा गाः प्रमापय, अश्वान् प्रमापय" इति । "नामांसो मधुपर्कः" इति क्वचित्, "अमांसो मधुपर्कः" इति तस्य निषेधश्च क्वचित् । एवं संन्यासस्य विधिः क्वचिन्निषेधश्च । क्वचित् वर्णाश्रमादिभेदं स्त्रीत्व-पुंस्त्वादिभेदं वा विनैव श्रुत्या चोदिता यागाः । राजसूयादीनां परं कर्तृविशेषनिर्धारणं ब्राह्मणे दृश्यत इत्यन्यदेतत् । स्मार्तैः पुनरधिकारिविशेषव्यवस्थापनं कृतम् । किमधिकेन वर्णाश्रमादिविभाग एव गुण-कर्मविभागशः कदाचित् परिकल्पित इति सर्वानुमतम् । ततस्तदनुरोधेन ततः प्राचीनानां धर्माणां नियतं विपरिवर्तनमभूदिति शक्यमनुमातुम् । तच्चैतद्विपरिवर्तनं संकोचनरूपमेवासीदित्याकलनीयम् । तस्माद्विज्ञायते कालानुरोधेन धर्मा अन्यथा क्रियन्त इति । एवमधर्मत्वेन प्रथिता अपि कश्चिद्धर्मत्वेन व्यवस्थाप्यन्ते । विधवाविवाहोऽधर्म इति आसीत् कदाचित्समयः, तं च समयं वेने राज्यं प्रशासति अन्यथाऽकुर्वन्निति च स्पष्टमवलोकनीयम् । एवं चतुर्विंशतिधर्मनाम्ना चतुर्विंशत्या धर्मज्ञैः समेतायां परिषदि देश-कालानुरोधेन धर्मविपरिवर्तनं कृतमिति वचमाश्रुत्यात् आक-

णीयामः। किञ्च देशानुरोधेनापि स्मार्तानां धर्माणां विपरिवर्तनं दृश्यते। तथा हि कदाचित् "प्रदानं प्राग्ऋतोः" इत्यासीन्नियमः। पश्चात् ऋतोः पूर्वमदत्ता पातित्यमर्हतीत्यपि कुत्रचिद्देशे सांप्रतिकी व्यवस्था। केरलेषु तु ऋतोरनन्तरमपि विवाहो धर्म्य इत्येव व्यवस्था। यथा "स्त्री तु दृष्टरजस्कापि रामक्षेत्रे न दुष्यति" इति शाङ्करस्मृतौ। सचेलावगाहस्नानेनैव शुद्धिरिति क्वाचित्को नियमः। अत्र निमित्तानि एकैकत्रैकैकं व्यवस्थापयन्ति। क्वचिद्देशे कौतुकमङ्गलादिधर्मः, क्वचिदयं नास्ति। एवं कैश्चिन्महर्षिभिर्धर्मं पृष्टेन याज्ञवल्क्येन देशविशेषप्राधान्येन धर्मव्यवस्थापनं कृतमिति विज्ञायते। "यस्मिन् देशे मृगः कृष्णस्तस्मिन्धर्मान् निबोधत" इति। अयमेव मनुना यज्ञीयदेश इति परिभाषित इत्यवगम्यते। बौधायनेन देशभेदेन कांश्चित् आचारानधिकृत्येदमुक्तम् "पञ्चधा विप्रतिपत्तिः दक्षिणतः, अनुपनीतेन, भार्यया सहभोजनम्, मातुलदुहितृ-पितृष्वसृदुहितृपरिणयनमिति, तथोत्तरतः, ऊर्णाविक्रयः, सीधुपानमुभयतोदद्भिर्व्यवहारः, आयुधीयकम्, समुद्रयानमिति, इतरदितरस्मिन् कुर्वन् दुष्यतीतर इतरस्मिन्, तत्र तत्र देशप्रामाण्यमेव स्यात्" इति। अतोऽनुमीयते देश-कालयोरवस्थाभेदेन कृतं विपरिवर्तनमिति। "यस्मिन् देशे पुरे ग्रामे त्रैविद्ये नगरेऽपि वा। यो यत्र विहितो धर्मस्तं तत्र न विचालयेत्" भृगुः। "यस्मिन् देशे य आचारो न्यायतः कल्पितो भवेत्। स तस्मिन्नेव कर्तव्यो न तु देशान्तरे स्मृतः"। इति देवलः, इत्याद्युक्तयस्तु न धर्मशास्त्रकारविषयाः। किन्तु सिद्धे धर्मानुशासनेऽभ्युपगते च तस्य प्रामाण्ये तदनुसृत्यैव पश्चादनुष्ठानं कर्तव्यम्, न तु स्वतन्त्राभियुक्तिभिः (स्वतन्त्रं) प्रवर्तितव्यमिति साधारणजनावगमनपराः।

अथ कैरिति कदेति कस्मै प्रयोजनाय विपरिवर्तितमिति विचारयामः। आदौ तावत् चन्द्रेन्द्र-शंकरप्रभृतिभिर्लिपिपद्धतिविना।

ततः सुरज्येष्ठेन समादिष्टैरग्नि-वायु-सूर्यैर्महर्षिभिः ऋग्यजुस्सम्नां वेदानां समाहरणं कृतम् । अयमेव वेदस्यादिमः संकलनरूपः संस्कारः । अयञ्च त्रेतायामभूदिति विज्ञायते । दृश्यते हि विष्णुपुराणे—"त्रेतायां प्रथमं व्यस्ताः स्वयं वेदाः स्वयंभुवा" इति । अस्मादष्टाद्शः संस्कारः "जातुकर्णोऽभवन्मत्तः कृष्णद्वैपायनस्ततः" इति तत्रैव पुराणे प्रदर्शितः कृष्णद्वैपायनकृतः । एतन्मध्ये संस्कारेषु प्रचलत्स्वेव गच्छति बहुतिथे काले आचारानुशासनमपि मनुपज्ञं क्रमेण व्यवस्थापितमभूत् । एष एव मनुर्मानववंशकुलकूटस्थ इति । ज्ञायते चास्य प्राचीनत्वं प्रामाण्यञ्च "यद्वै किञ्चन मनुरवदत् तद् भेषजम्" इति तैत्तिरीयकब्राह्मणात् । "मनुर्वै यत् किञ्चिदवदत् तद् भेषजं भेषजतायाः" इति छान्दोग्यम् । बृहस्पतिरपि "मन्वर्थविपरीता तु या स्मृतिः सा न शस्यते" इति । एवं भारतेऽपि "पुराणं मानवो धर्मः," इत्यादिना मन्वभिप्रायमुत्कृष्टं मन्यते व्यासः । तस्माद् धर्मशास्त्रप्रवर्तकेषु प्रथमो मनुः । संप्रत्युपलभ्यमाना मनुस्मृतिः प्राथमिकमनूपज्ञमेव विशदीकृत्य तदनुयायिना भृगुणा सङ्कलिता । तथा हि "एतद्वोऽयं भृगुः शास्त्रं श्रावयिष्यत्यशेषतः ।" "यथेदमुक्तवाञ्छस्त्रं पुरा पृष्टो मनुर्मया । तथेदं यूयमप्यद्य मत्सकाशान्निबोधत, । उपसंहारेऽपि "एवं स भगवान् देवो लोकानां हितकाम्यया । धर्मस्य परमं गुह्यं ममेदं सर्वमुक्तवान् ॥" अनेनानुमीयते कूटस्थमनूपज्ञम् अस्या स्मृतेर्मूलमिति । उक्तञ्च याज्ञवल्क्यस्मृतिव्याख्याने "याज्ञवल्क्यशिष्यः कश्चित् प्रश्नोत्तररूपं याज्ञवल्क्यप्रणीतं धर्मशास्त्रं संक्षिप्य कथयामास यथा मनुप्रोक्तं भृगुः" इति । याज्ञवल्क्यस्मृतौ चैवमवलोक्यते "मन्वत्रि-विष्णु-हारीत-याज्ञवल्क्योशनोऽङ्गिराः । यमापस्तम्ब-संवर्ताः कात्यायन-बृहस्पती ॥ पराशर-व्यास-शङ्ख-लिखिता दक्ष-गौतमौ । शातातपो वसिष्ठश्च धर्मशास्त्रप्रयोजकाः" ॥ इति । अत्र याज्ञवल्क्यग्रहणमपि स्मृतिसंकलयितुः कूटस्थात् याज्ञवल्क्या-

दन्यत्वं व्यनक्ति। एवं क्वचित् क्वचित् कूटस्थादप्यर्वाचीनानां नामनिबन्धनात् प्रक्षिप्ताश्च श्लोकाः समुपलक्ष्यन्त इति निश्चेतुं शक्यते। एवं स्थिते तेषां कालनिर्णयो दुर्निर्वारण एव। किञ्च न सर्वेषां पूर्वं प्रदर्शितानां ग्रन्थाः संप्रति सुगमाः। परन्तु क्वचित् क्वचित् पराशरसंहिताव्याख्यानादौ कानिचन वाक्यानि तत्प्रणीतत्वेनोद्धृतानि दृश्यन्ते। अत एतेप्रसिद्धाः शास्त्रकारा इति निर्धार्यते। एतेषां पौर्वापर्यक्रमः दुर्निर्वारणः। अथापि धर्मशास्त्रकालं सामान्यतो विचारयन्तो वयमेवमभिप्रेमः—यदा ब्राह्मणमतप्राबल्येन यज्ञप्रचारः सर्वतोमुखः प्रवृत्तः, तदनुसरणश्रद्धालवश्च साधारणा अप्यासन्, तदा यज्ञवदन्येऽपि केचन धर्माः प्राधान्येनानुष्ठेयाः सन्तीति साधारणजनानुजिघृक्षया कांश्चन धर्मान् व्यवस्थापयामासुः। कालक्रमेण यागादपि त एव धर्मा अपरिहरणीया इत्यादि व्यवस्थापयांचक्रुः। तदनन्तरं गवालम्भादयो ब्राह्मणचोदिता अपि हिंसामूलकत्वात् सुरापानादिश्च प्रमादकरत्वादन्ये च केचिदन्यस्मात् कारणात् शास्त्रकारैर्निषिद्धाः। तन्निषेधं हिंसादिमूलकत्वेन प्रवृत्तं मन्वानाः प्रतिनिधं परिकल्प्य प्रधानान् यागादीन् कर्माण्येव व्यवस्थापयामासुः। एवं धर्मशास्त्रस्य प्रचारे प्राबल्ये च दृष्टे वेदान्तिमतं पूर्वमुपनिषत्सूक्तं क्रमेण प्रवृद्धं शाखोपशाखं वितताम। एतेन ब्राह्मणप्रचारानन्तरं वेदान्तिमतप्रचारात् पूर्वं धर्मशैर्धर्मव्यवस्थापनं कृतमिति विज्ञायते।

ननु व्यासादीनामपि विधि-निषेधादयो धर्मशास्त्रेषु दृश्यन्ते। तस्मादनन्तरं वेदान्तिमतप्रचारादिदं धर्मशास्त्रं कथं प्रचारितमभूदिति विज्ञायते;उच्यते,वेदान्तिमतमित्यनेन न केवलं शङ्करभगवत्पादादिभिर्व्यवस्थापितमस्माभिरिहोक्तम्, किन्तु प्राचीनशुकप्रभृतीनामेव विवक्षणं कृतम्, न तेन विरोधः। किञ्च अर्वाचीनवेदान्तिमतप्रचारकाणां व्यवस्थापनादर्वागपि न किमपि धर्म-

शास्त्रसंस्करणं प्रवृत्तमित्यवोचम्। इतिवृत्तगवेषणायां कृतायां प्रायेण ब्राह्मण-वेदान्तसिद्धान्तयोरन्तराल एव धर्मशास्त्रप्रचारः प्राधान्येनासीदिति प्रतीयते। किञ्च देवनिर्मिते ब्रह्मावर्ते देवप्राधान्ये सति नासीदतितरां धर्मनियन्त्रणा। अयं हे : "सरस्वतीदृषद्वत्योर्देवनद्योर्यदन्तरम्। तं देवनिर्मितं देशं ब्रह्मावर्तं प्रचक्षते" इति मनुना प्रदर्शितः। ब्रह्मावर्तात् प्राचीं क्रमेण अभिष्यन्दमाना देवाः प्रस्थानान्तरमातस्थुः। कमात्तेषामेव देवानां सन्ततिः ब्रह्मर्षिपदेन व्यवहृता चासीत्। तैरेव ब्रह्मर्षिभिरधिकृतो देशः ब्रह्मर्षिदेश इत्युच्यते। उक्तश्चायं देशः—"कुरुक्षेत्रञ्च मत्स्याश्च पाञ्चालाः शूरसेनकाः। एष ब्रह्मर्षिदेशो वै ब्रह्मावर्तादनन्तरः" ॥ इति। एत एव ऋषयो मन्त्रद्रष्टार आसन्। आगमज्ञाः चरित्रान्वेषणपटीयांसः इतरैरनुकरणीयाश्चासन्। एतदेवाभिप्रेत्य मनुना "एतद्देशप्रसूतस्य सकाशादग्रजन्मनः। स्वं स्वं चरित्रं शिक्षेरन् पृथिव्यां सर्वमानवाः" इत्युक्तम्। पश्चाच्च मानववर्गो देवानामृषीणाञ्चाचारात् नानुमेने। पृथगेव धर्मशास्त्रं व्यवस्थापयामास। तदेतत् सुस्पष्टमेवोक्तम्। "अनुष्ठितन्तु यद्देवैर्मुनिभिर्यदनुष्ठितम्। नानुष्ठेयं मनुष्यैस्तदुक्तं कर्म समाचरेत्।" इति बोधायनेन ॥ अनेन विज्ञाप्यते मनुप्रभृतिभिरनुशिष्टं कर्मैव अनुष्ठेयम्, न तु प्राचीनानां आचाराणामनुवर्तनमिति।

किंच वेदे वर्णविभाग एव प्राधान्येन न क्वापि दृष्टः। देववर्गे वर्णाश्रमविभागः न क्वापि प्रसन्ने प्रतिपाद्यते। ऋषिवर्गे तु क्वचित् क्वचित् वर्णाश्रमविभागोऽस्तीति प्राचीनोक्तिभिरवगम्यते। तथापि निर्नियन्त्रण एवायं दृष्टः। विश्वामित्राद्युपाख्यानानि व्यक्तमेवामुमर्थं समर्थयन्ति। अतश्च ऋषिवर्गेऽङ्कुरितप्रायो वर्णाश्रमादिविभागो धर्मशास्त्रकारैर्मन्वादिभिर्नियन्त्रितः मन्वनुयायिभिश्च अनुष्ठितः। संप्रत्यपि भारतीय-

मानवसामान्येनानुस्रियमाण एवावलोक्यते। तस्मादायातं ऋषीणां मन्त्रद्रष्टॄणां मतं यदा प्रचुरं प्रचारं प्राप, ततः परमेव धर्मशास्त्राणि मनुप्रभृतिभिरनुशिष्टानीति।

अथानुशासनप्रयोजनम्। सर्वमेव ह्यनुशासनं योगक्षेमसंरक्षणाय क्रियते। इदमपि तदेव मुख्यं फलमुद्दिश्य कृतमित्यनुमीयते। यदि नानुशिष्यते, तर्हि महत्साङ्कर्यं समापततीति मन्वानैरेव मन्वादिभिर्धर्मोऽनुशिष्टः। गुरुतरप्रायश्चित्तादिविधानाच्च अधर्मे प्रवृत्तिः परिहृतप्राया भवति। अज्ञानात्प्रवृत्तस्यापापोनोऽपनोदद्वारा संव्यवहार्यतादिसंपादनेन लोकानुग्रहश्च कृतो भवति। अनियन्त्रणप्रयुक्तं सर्वमप्युत्पथप्रधानं निषिद्धं भवति। अतश्च अनियन्त्रणप्रयुक्तामनाशास्यां साङ्कर्यरूपां समुदायापदं दृष्ट्वा मन्वादयो महर्षयस्तत्तद्देश-कालानुरोधेन गुणकर्मविभागेन वर्णाश्रमादिविभागपुरस्सरं धर्मं व्यवस्थापितवन्त इति।

अत्रास्माकमिदमेव वक्तव्यम्—यदि शास्त्राणि नाम शासनार्थमपि प्रवर्तन्ते। तत्र च सर्वेषां शास्त्राणां शासयितृपुरुषनिर्णयपूर्वकत्वन्तु नियमेनापेक्ष्यते, तर्हि ईश्वरीयनिर्णयपूर्वकत्वस्य तेषां कुसुमाञ्जल्युक्तरीत्याङ्गीकारे का नाम बाधा भवतीति न वयं जानीमः। एतेन—देश-कालानुसारेण धर्माणां परिवर्तनमिति विवादोऽपि —परास्तः। धर्मशास्त्रनिबन्धेषु परस्परविसंवादो हि यो दृश्यते, स वैकल्पिकशास्त्रानुसारी, न तु तत्तत्कालानुसारीति हि नियतमिदमूरीकर्तव्यम्। यत्तु कुत्रचन कुत्रचन सङ्कोचो दृश्यते, स तु शक्तिसङ्कोचाभिप्राय एव, न हि काल-भेदेन धर्माणामन्यथाभावे किमपि गमकमस्ति। नहि सर्गादौ वर्णाश्रमविभागो नासीदित्यत्र प्रमाणमस्ति। अन्यथा हि कस्यचन सुखिनः कस्यचन दुःखिनश्च सर्जनात्कथं वा भगवतो न वैषम्यनैर्घृण्ये? इति सर्व एव विवेचयन्तु। अस्तु वा कथमपि सर्गादौ

भगवता सर्वेषां शुभाशुभं भावि समाकलय्य धर्मशास्त्राणि प्रवर्तितानीति। न हि तावतापि धर्मस्य कालभेदेन परिवर्तनं सम्भवति। भगवता हि भावि कालादिकं सर्वं समालोच्यैव धर्मव्यवस्था कृतेत्यवश्यमेवोरीकर्तव्यम्। न हि भगवतो भाविकालादिपरिज्ञानं नास्तीति कोऽपि वक्तुम्पारयति।

एतेन—स्मर्तारोऽपि-व्याख्याताः। न हि तेषामपि भगवत इव तादृशं भाव्यवस्थापरिज्ञानमिति कल्पनं सम्भवति। अत एव स्मृतीनामपि श्रुतिमूलत्वेन प्रामाण्यव्यवस्थापनं सार्थकं भवति; अन्यथा स्मृतीनामपि स्वत एव प्रामाण्यं हि कथं वा न सम्भवति? श्रुतिरिति वेदस्य—मन्वादिनिबन्धानां स्मृतिरिति च व्यवहारोऽपि—प्राथमिकं ज्ञानं वेदस्य स्वरूपतः, मन्वादिनिबन्धानान्त्वर्थतः प्रमाणान्तरापेक्षेति गमयति।

यत्तु "हेतुदर्शनाच्चे"ति सूत्रेण मन्वादिनिबन्धानामपि हेतुमूलकानां न प्रामाण्यमिति व्यवस्थापितम्, तदिदं तत्तत्कालदेशपरिस्थितिमूलकत्वं न धर्मशास्त्राणामिति गमयति। यावता न मन्वादीनामपि भाव्यवस्थापरिज्ञानशक्तौ संशयः, तावतेदमपि सिद्धम्—यदिदानीन्तनानामस्मदादीनां भाविपरिज्ञानशक्तेर्न वार्तालेशस्यापि सम्भावनेति। न हि कोऽपीदानीं धर्मपरिवर्तनं भाव्यवस्थापर्यालोचनेन कङ्क्षति, किन्तु वर्तमानावस्थापर्यालोचनेनैव। नहि वर्तमानैवावस्था समालोचनीया, न भाविनीति कोऽपि प्रेक्षावान् वक्तुमर्हति। न हि भाव्यवस्थापरिज्ञानं कस्यापीदानीं वर्तते। अस्तु वा कथमपि भाव्यवस्थापरिज्ञानशक्तिरपि कस्यापि। मन्वादिभिरपि भाव्यवस्थासमालोचनेनैव व्यवस्था कृता। तत्र वयसम्भवबुद्धिः, तर्हि कथं वाऽस्मदादिसम्भावनामात्रस्य प्रामाण्यमापतिष्यति। न हि वयं मन्वाद्यपेक्षयापि विज्ञाः शक्तिमन्तो वा। उक्तं हि तैरेव—सर्वैरपि धर्मशास्त्रकारैर्युक्तिभिः प्राधान्येन धर्म-

तत्त्वनिर्णयः कर्तव्य इत्यागमानामनुशासनम्, न युक्तिपर्यालोचनाय साधारणो जनः प्रभवतीति" । अत्रेदमेव तेषामपि सम्मतम्, यत् साधारणानां धर्मशास्त्रपरिवर्तने नाधिकार इति ।

इदमेवात्रालोचनीयम्—यत्को वाऽसावसाधारणो जन इदानीं पराशरादिव्यवस्थापरिवर्तनेऽपि शक्त इति, साधारण्यमसाधारण्यं वा कथं निर्णेतव्यमिति च । वयन्तु पश्यामः—न कोऽपि तादृश एकोऽपि भाव्यवस्थापर्यालोचनसमर्थो मन्वाद्यपेक्षयाऽप्युत्कृष्टो वर्तेत इति । वर्तमानावस्थामात्रपर्यालोचने सर्वोऽपि शक्त एव । न हि वर्तमानावस्थामात्रपर्यालोचनं पर्याप्तं कारणं धर्माधर्मपरिवर्तनस्य । तत्र च साधारणजनानुजिघृक्षैवानुशासनप्रयोजनमित्यत्रास्माकमपि न विप्रतिपत्तिः । यदि साधारणजनपदेन जीवन्मुक्तेतरा विवक्ष्यन्ते, भगवतापि हि तेषामेवानुजिघृक्षया शास्त्रं प्रवर्तितम् । न हि पूर्वतनानामनुशासनानां देशकालानानुगुण्यमपि साधयितुं शक्यते ।

अत्रेदं विचारणीयम्—को वा धर्म इदानीं देशकालाननुगुणो वर्तेत इति । जातिविभागो हि न सर्वथा प्रकृतकालविरोधी । न हि माहम्मदीयाक्रमणकालेऽपि जातिविभागः परित्यक्तः । न वाऽस्माभिरपि अत्यन्तापदवस्थायां तस्मिन् क्षणे जातिविभागो गणनीय इति मन्यते । प्रसिद्धं हि विश्वामित्रस्यापि श्वजाघनीभक्षणम् । न हि तादृशी काप्यापदिदानीं वर्तते । अर्थो समर्थो विद्वानधिक्रियत इत्येव खलु वयमपि मन्यामहे । एतेन—पतितपरावर्तनादिकमपि—व्याख्यातम् । तथापि वक्ष्यमाणया व्यवस्थया, वयं पश्यामः, समाजस्य शास्त्रस्य च रक्षणं भवतीति ।

सर्वथा च शास्त्रार्थानुसन्धाने युक्तीनामुपयोगो न कस्याप्यनभिमतः । इदमेवात्र विप्रतिपन्नं दृश्यते, यददृष्टार्थेषु धर्मेषु युक्तिविनियोगमनुसृत्य विपरिणामः कर्तव्य इति । न ह्यदृष्टार्थ-

त्वव्यवस्थापनं परप्रतारणार्थम्। दृष्टार्थत्वे हि सर्वेषां विप्रतिपत्तेरनवकाशः स्यात्। न हि वयमपि धर्मस्य देश-कालभेदेन भेदं नोरीकुर्मः। सन्ति हि देशधर्माः कालधर्मा अवस्थाधर्माश्च बहवः। इदमेवात्रालोचनीयम्—यद्देशादिभेदेन तेषां धर्माणां भेदोऽपि भवति, न वेति। न हि वयमपि ब्राह्मणधर्मं क्षत्रियाणां दिवा धर्मं रात्रौ वोरीकुर्मः, देशधर्मा हि त एव भवितुमर्हन्ति, ये शास्त्रेषु विकल्पेन विहिताः। अविकल्पेन विहितानां निषिद्धानां च सर्वदेशधर्मत्वमेवेति हि होलाकाधिकरणे व्यवस्थापितम्। एतेन कालधर्मा अपि—व्याख्याताः। तेऽपि हि तत्तद्धर्मविध्यर्थवादेषु कालविशेषत्वादिलिङ्गानुसारेणैव व्यवस्थाप्यन्ते। व्यवस्थापितं चैतत् वीरमित्रोदये—"पुराकल्पे तु नारीणां मौञ्जीबन्धनमिष्यते" इति व्याख्यानावसरे। अत्र पुराकल्पशब्देनार्थवादविशेषो विवक्ष्यत इति तत्र व्यवस्थापितम्। एतेन—कलिवर्ज्यप्रकरणमपि—व्याख्यातम्। शाखाविशेषेऽर्थवादविशेषे वा कालविशेषलिङ्गानुसारेणैव तस्य प्रवृत्तत्वात्। यत्तु महाभारतादौ द्रौपदीपञ्चपतित्वादिकमभ्यनुज्ञातमपि पुनरन्यथा अनेकपतित्वादिकं खण्डितम्। तत्र वयं मन्यामहे—धर्मान्तरविरोधेऽवश्यमभ्यनुज्ञातव्ये पञ्चपतित्वादौ प्रसक्ते स्थितस्य गतिः कल्पनीयेति भावेनैव तत् सम्पादितमिति। पाण्डवानां हि मातृवाक्यपरिपालनं धर्मविशेषोऽपि सम्पादनीयः, द्रौपद्याः पञ्चपतित्वमधर्म इति उभयं परस्परविरुद्धं समापतितमनुष्ठातुमिति सर्वविदितमिदम्। तत्रापि वस्तुगत्या न धर्मत्वबुद्धिर्युक्तेत्यभिप्रायस्तु वार्तिककाराणां दृश्यते। अत एवाचारप्रामाण्यव्यवस्थापनावसरे द्रौपद्याः पञ्चपतित्वमपि वस्तुगत्या नासीदिति विवृतम्। अयमत्र कुमारिलपादानामाशयोऽवगम्यते—यद्धर्मशास्त्रेतिहासयोर्विरोध इतिहासस्य कथमप्यन्यथानयनं कर्तव्यमिति। युक्तं चैतत्। इतिहासेन हि व्यक्तिविशेषा-

णामाचारो धर्ममानतयाऽवगम्यते, न तु धर्मतया, शास्त्रेण तु सर्वसाधारणी व्यवस्थाऽवगम्यते, इति सर्वसाधारणव्यवस्थापर्यालोचनावसरे शास्त्रमेव मुख्यतया समादरणीयम्, न त्वितिहासः। एतेन— शास्त्रविरुद्धेतिहासान्तराण्यपि—व्याख्यातानि।

यत्तु महाभारते १२२ तमे अध्याये—"अथ त्विदं प्रवक्ष्यामि धर्मतत्त्वं निबोध मे। पुराणमृषिभिर्जुष्टं धर्मविद्भिर्महात्मभिः। अनावृताः किल पुरा स्त्रिय आसन् वरानने। कामचारविहारिण्यः स्वतन्त्राश्चारुहासिनि॥ पतिं व्युचरमाणानां कौमारात् सुभगे पतीन्। नाधर्मोऽभूद्वरारोहे स हि धर्मः पुराभवत्। तं चैव धर्मं पौराणं तिर्यग्योनिगताः प्रजाः। अद्याप्यनुविधीयन्ते कामक्रोधविवर्जिताः। प्रमाणदृष्टो धर्मोऽयं पूज्यते च महर्षिभिः। उत्तरेषु च रम्भोरु कुरुष्वद्यापि पूज्यते। स्त्रीणामनुग्रहकरः स हि धर्मः सनातनः। अस्मिंस्तु लोके न चिरान्मर्यादेयं शुचिस्मिते। स्थापिता येन, यस्माच्च, तन्मे विस्तरशः शृणु। बभूवोद्दालको नाम महर्षिरिति नः श्रुतम्। श्वेतकेतुरिति ख्यातः पुत्रस्तस्याभवन्मुनिः। मर्यादेयं कृताऽनेन धर्म्या वै श्वेतकेतुना। कोपात्कमलपत्राक्षि यदर्थं तन्निबोध मे। श्वेतकेतोः किल पुरा समक्षं मातरं पितुः। जग्राह ब्राह्मणः पाणौ गच्छाव इति चाब्रवीत्। ऋषिपुत्रस्ततः कोपं चकारामर्षचोदितः। मातरं तां तथा दृष्ट्वा नीयमानां बलादिव। क्रुद्धं तं तु पिता दृष्ट्वा श्वेतकेतुमुवाच ह। मा तात कोपं कार्षीस्त्वमेष धर्मः सनातनः। अनावृता हि सर्वेषां वर्णानामङ्गना भुवि। यथा गावः स्थितास्तात स्वे स्वे वर्णे तथा प्रजाः। ऋषिपुत्रोऽथ तं धर्मं श्वेतकेतुर्न चक्षमे। चकार चैव मर्यादामिमां स्त्री-पुंसयोर्भुवि। मानुषेषु महाभागे न त्वेवान्येषु जन्तुषु। तदाप्रभृति मर्यादा स्थितेयमिति नः श्रुतम्। व्युचरन्त्याः पतिं नार्या अद्यप्रभृति पातकम्। भ्रूणहत्यासमं घोरं भविष्यत्यसुखावहम्।

भार्यां तथा व्युचरतः कौमारब्रह्मचारिणीम् । पतिव्रतामेतदेव भविता पातकं भुवि । पत्या नियुक्ता या चैव पत्नी पुत्रार्थमेव च । न करिष्यति तस्याश्च भविष्यति तदेव हि । इति तेन पुरा भीरु मर्यादा स्थापिता बलात् । उद्दालकस्य पुत्रेण धर्म्या वै श्वेतकेतुना । सौदासेन च रम्भोरु नियुक्ता पुत्रजन्मनि । मदयन्ती जगामर्षिं वसिष्ठमिति नः श्रुतम् । तस्माल्लेभे च सा पुत्रमश्मकं नाम भामिनि । कृताकृतौ राजपुत्रि स्त्रियाः भर्ता पतिव्रते । नातिवर्तव्य इत्येवं धर्मं धर्मविदो विदुः । शेषेष्वन्येषु कालेषु स्वातन्त्र्यं स्त्री किलार्हति । भर्ता भार्यां राजपुत्रि धर्म्यं वाऽधर्म्यमेव वा । यद् ब्रूयात्तत्तथा कार्यमिति वेदविदो विदुः ॥" इति पुरा कदाचन स्त्रीणां परसंसर्गस्यादोषत्वं वर्णितम्, तदिदं नियोगविध्यर्थवादतया न स्वार्थे प्रमाणम् ।

अत्र हि "पुराणमृषिभिर्जुष्टमि"ति ऋषिधर्मस्यैवोपक्रमणं कृतम्, ऋषीणां च "तेजीयसां न दोषाय" इति वचनेन न कुत्रापि प्रत्यवायः पश्वदीनामिव भवति । महात्मनां हि ऋषीणां विहिताचरणं प्रतिषिद्धाचरणं वा न शरीरारम्भकं भवति; ज्ञानेन समूलस्याज्ञानस्य नाशितत्वात् । ततश्च भोगयोनित्वमेव ऋष्यादिशरीराणाम्, न कर्मयोनित्वम् । इदं च पश्वादिशरीराणामपि समानम्, तेषामपि केवलभोगयोनित्वात् ।

एतदेवाभिमेत्य—"पश्वादिभिश्चाविशेषात्" इति पश्वादिदृष्टान्त एव ज्ञानिनामुपात्तः, न तु पामरादिदृष्टान्तः । तथाच पश्वादीनामिव महर्षीणामपि विधि-निषेधानधिकारित्वादृषीणामाचरणमत्रोपन्यस्तं नास्मदादीनां धर्मशास्त्राधिकारिणां तन्निषिद्धमुपादेयं गमयति । अत एवात्रापि "तं चैव धर्मं पौराणं तिर्यग्योनिगताः प्रजाः । अद्याप्यनुविधीयन्ते कामक्रोधविवर्जिताः" इति तिर्यग्जातावेवानुविधानं बोध्यमानमुपपद्यते । तथाचोक्तेति-

ह्रासानुसारेण न पुरा स्त्रीस्वातन्त्र्यादिकं तत्कामचारित्वादिकं वा सर्वं धर्म आसीदिति कल्पनं सम्भवति। एतदेवाभिप्रेत्य प्रकृते नीलकण्ठ्याम्—'यथा स्तेनो भ्रूणहैवमेष भवति योऽयोनौ रेतः सिञ्चती'त्यनेनान्यदारेषु पुंसां गमनात् प्रत्यवायः श्रुतिसिद्धः, तथाऽर्यायां निष्कृतं जारिणोवेति, मन्त्रे जारिण्यादिनिष्कृतेः पीडायाश्च दर्शनात् स्त्रीणामपि परसंसर्गे दोषोऽस्त्येवोक्तः; तथापि श्रौतार्थस्यैव कयाचित् भङ्ग्या व्यवस्थेयं विहितेति ज्ञेयम्। अथवा—व्युत्क्रमे तेजस्विनां न दोषः, किन्तु पृथग्जनानामेवेति तात्पर्यम्, अन्यथा कृष्णस्यापि पारदार्यदोषप्रसक्तेः, अहल्यादिजाराणामिन्द्रादीनां तदप्रसक्तेरित्यास्तान्तावत्—' इति व्याख्यातम्। एतेन—समांसो मधुपर्कः, मांसश्राद्धमित्यादिव्यवस्था अपि व्याख्याताः। नहि मांसभक्षणं कदापि नित्यतया विहितम्, किन्त्वनिषिद्धमात्रम्। कामत एव हि मांसभक्षणादौ सर्वेषां प्रवृत्तिः, कामोद्रेकनिवारणार्थं मांसभक्षणादिनिषेधः।

धर्मज्ञानां हि धर्माधर्मव्यवस्थापकत्वस्य शास्त्रैकमूलतया कल्यादिषु धर्मविशेषव्यवस्थापनं संकोचादिकं च सर्वं न केवलपरिस्थितिमात्रमूलकम्। सर्वथा तु धर्मसंकोचोऽयं न युक्त्यधीनः। अत्र च युक्तिपदेन प्रत्यक्षमूलकयुक्तिरेव विवक्षिता, नतु शास्त्रमूलकयुक्तिः। धर्मसंकोचो हि अशक्तिपर्यालोचनेन शास्त्रानुसारिमीमांसान्यायानुगृहीतः। यथाच यथाशक्तिन्यायस्य न काम्यकर्मादिषु नित्येतरेषु प्रवृत्तिः, तथा सर्वविदितमिदम्। यथाशक्तिन्यायेन हि प्रायश्चित्तेष्वङ्गविशेषलोपो नित्यकर्मस्वङ्गविशेषलोपो वा सोढव्यः।

कलिवर्ज्यप्रकरणे तु निमित्तं शाखान्तरीयवाक्यविशेष एव भवितुमर्हतीति तु बहूनामेतन्मतम्। शाखाविशेषे हि स्मर्तृभिः कलिकाले कर्मविशेषाणां निषेधादवगम्यते कालवि-

शेषोऽपि कलीतरो निमित्ततयोपात्त इति। न ह्यन्यथा पृथङ्-निषेध उपपद्यते। निषेधोऽपि हि शास्त्रप्राप्तस्य विकल्पं विना नोपपद्यत इति पृथङ् निषेधो हि कथमपि नोपपद्यते। न हि विधि-निषेधयोर्विषये सामान्य-विशेषन्यायः प्रसरति; अन्यथा—"यजतिषु येयजामहं करोति, नानूयाजेषु' इत्यत्रापि विशेष-प्रतिषेधेन विकल्पापत्तौ तत्र विकल्पापत्त्या पर्युदास एव युक्त इति मीमांसासिद्धान्तो नोपपद्यते।

यत्र च विभिन्नस्मृत्योरेकवाक्यता क्रियते, तत्र तयोरेक-मूलकल्पनमिदं मयूखकाराणामपि सम्मतम्। अत एव "प्रायश्चि-त्तविधानं च विप्राणां मरणान्तिकमि"ति, कामकृते पापादौ तु न तस्य निष्कृतिर्दिष्टा भृग्वग्निपतनादृते इति। विहितस्य विधानमुपदेशः। एवं च 'मतिपूर्वमनिर्देश्यं मरणान्तिकमिति स्थि-तिः" इति मनुवाक्यमेतद्युगविषयमेव; एकमूलकल्पनालाघवात्" इत्युक्तं तत्र। तथाचोक्तमीमांसासिद्धान्तनिष्णातानां निबन्धका-राणां धर्मज्ञानां वा कालविशेषे निषेधवचनोपन्यासो हि तत्तद्धर्म-विधायकवाक्येषु कलीतरकालविषयत्वं विना नोपपद्यत इति कलि-वर्ज्यप्रकरणमिदमर्थसिद्धानुवादपरमित्येषोऽरीकर्तव्यमिति कलि-कालावच्छेदेन धर्मत्वस्याप्राप्तत्वाद् न धर्मपरिवर्तनवार्ता क्वापि वर्तते। एते च निषेधा इति वार्तिकानुसारिणः। निबन्धानुसारि-णस्तु "रात्रौ श्राद्धं न कुर्वीत" इति रात्र्यधिकरणकत्वनिषेधेन हि दिवैव श्राद्धं धर्म इति सिद्धान्तो यथा सिद्धो भवति, यथा च प्रा-तरग्निहोत्रविधिना मध्याह्नेऽग्निहोत्राधर्मत्वं सिद्धं भवति, तथाऽ त्रापि व्यवस्थाऽनुसन्धेया—इति वदन्ति।

धर्मविप्लवा (विकल्पा) पत्तेरेते पर्युदासा एव इति शंकरभट्ट-सुतदामोदरभट्टैरपि कलिवर्ज्यप्रकरणस्य पर्युदासपरत्वमेवाश्रितम्। मांसमीमांसाभिधाने तु निबन्धे कलिवर्ज्यप्रकरणे पर्युदासत्वं प्रतिपे-

धत्वं वेति पक्षद्वयमप्युपन्यस्तम्। तद्यथा—अस्मन्मते तु प्रकरण-बहिर्भावात् निषेधस्याक्रत्वर्थत्वेन पुरुषार्थत्वेन पुरुषार्थत्वात् कलौ श्राद्धे मांसदानेन सर्वः प्रत्यवैतीति फलवान्निषेधः। प्रकरणाद्धि पुरुषार्थस्यापि निषेधः क्रत्वर्थो भवति। तदाहुर्भट्टपादाः—"स्नुषा-यमांसभक्षादि पुरुषार्थमपि श्रितः। प्रतिषेधः क्रतोरङ्गमिष्टः प्रकरणाश्रयादि"ति। न तु क्रत्वर्थस्याप्रकरणे निषेधः। न च विहि-तप्रतिषिद्धाष्टदोषदुष्टविकल्पपरिजिहीर्षया श्रुताश्रुतयोर्व्यवस्था-पनम्; निषेधस्य विशेषविषयतया "दीक्षितो न ददाति न जुहोती"तिवत् बाधस्यैवौचित्येन विकल्पाप्रसक्तेः। नन्वेवम्—"न तौ पशौ करोती"त्यनेन आज्यभागाख्यविशेषविषयेणाऽऽ-ज्यभागानाज्यभागविषयचोदकबाधात् पशावाज्यभागविकल्पो न स्यात्? अथायं विशेषविषयत्वात् बाधत एव, तर्ह्याज्यभागनिषे-धोऽपि बाधेनैव चोदकस्य न विकल्पयेदाज्यभागौ। वक्तव्यो वा विशेषः, श्रूयतामत्र विशेषः। यद्युभावपि विधिप्रतिषेधौ पुरुषार्थौ क्रत्वर्थौ वा स्याताम्, ततः स्याद्विकल्पः। पुरुषार्थतया तु विहिता-न्यग्निहोत्रादीनि क्रतुमध्येऽपि प्राप्तानि प्रतिषिध्यन्ते, क्रत्वर्थतया वा दध्युपगमादिवत्। अत ऐकार्थ्याभावात् विकल्पोऽप्रसक्तः। क्रतुमध्ये नियतमग्निहोत्रादिवर्जनीयम्। आज्यभागविधिप्रतिषेधयोस्तु एकार्थत्वाद्विकल्पः, एकातिरात्रार्थषोडशिग्रहणाग्रहणवत्। प्रस्तुते तूक्तरीत्या विकल्पाप्रसक्तेर्न तन्निवृत्तये श्रुताश्रुतयोर्व्यवस्थापन-मिति वृद्धपद्धतिमध्यासीनाः।

अन्ये तु यथास्थितग्रन्थभाष्यानुसारेण "दीक्षितो न ददाति न जुहोती"त्यत्र पर्युदास एव, दीक्षितान्यो होमादि कुर्यादिति; जुहोत्यनुवादोपस्थापितेन दूरस्थेनापि तद्विधिनैकवाक्यत्वात्। आर्थिकसमानविषयत्वेन विकल्पापत्तेः पुरुषार्थक्रत्वर्थहिंसावि-धिनिषेधयोः क्रत्वर्थपुरुषार्थचमसगोदोहनविध्योर्बाध्यबाधकभाववत्

तत्रापि समानविषयत्वापेक्षणात् । तथापि प्रस्तुते कलिव्यतिरिक्ते मांसं दद्यादिति दूरस्थेनानुवादवचनोपस्थापितेनैकवाक्यतया पर्युदासत्वम् । निषेधत्वे हि "न तौ पशौ करोति"इतिवद्विकल्पः स्यात् । अपि च पत्न्यर्थाग्निहोत्रहवणीलेहादिनिषेधवच्चेत्तदा प्रकरणाभावेऽपि निषेध्यक्रत्वर्थत्वात्तल्लिङ्गेन निषेधस्यापि क्रत्वर्थता; अन्यथा निषेध्यविधानैयर्थ्यापत्त्या व्यर्थो स्यात् । तथाच निषेधे क्रत्वर्थे पशाज्यभागयविकल्पापत्तिः । पुरुषार्थे तु क्रतुवैगुण्यापत्तिः । पुरुषार्थेन निषेधेन क्रत्वर्थबाधाभावात् विपर्ययात् । अत एवंजातीयकेषु पर्युदासत्वमेव । आशौचे श्राद्धवैश्वदेवादिषु पुरुषार्थनिषेधे विधि-निषेधयोः पुरुषार्थस्याविकल्पः स्यान्निषेधपक्षे । अतस्तेऽपि पर्युदासा एवेत्याचार्येण । कृतविवाहादेः 'संक्रान्तिमन्वादि'-इत्यादिषु पिण्डवर्जनेऽपि एवमेव पर्युदासता । अत एव संक्रान्त्यमावास्यादिश्राद्धसन्निपाते तन्त्रेण श्राद्धसिद्धिरुक्ता न्यायविद्वद्वर्हेमाद्रिप्रभृतिभिः । अन्यथा हि विरुद्धाङ्गत्वान्न तन्त्रतासम्भवः । "न तौ पशौ"इत्यत्र तु वचनव्यक्तिसंभवात्पर्युदासासंभवेनागत्या निषेधो विकल्पदर्शनेति । तदलमतिदूरं गत्वा । पर्युदासत्वे कलौ श्राद्धे मांसवर्जनस्य न विकल्पापत्तिर्नतरां शुभाशुभफलस्थापनम्, इति निषेधत्वे पर्युदासत्वे वा नियमे कलौ श्राद्धे मांसवर्जनं सिद्धम् । अत्र बहु वक्तव्यमपि विस्तरापत्तेर्न वदामः ।

तदयं निष्कर्षः—

मन्वादिप्रणीतानामेव धर्मशास्त्राणां वेदमूलत्वात् तान्येव धर्मप्रमाणानीति तदधिगमोपयोगितया तच्छास्त्रप्रणेतारः किं परिगणनमर्हन्ति, उत नेति समालोचयामः। तत्र केचन मन्यन्ते—

"तेषां मन्वङ्गिरो-व्यास-गौतमात्र्युशनो-यमाः।
वसिष्ठ-दक्ष-संवर्त-शातातप-पराशराः।
विष्ण्वापस्तम्ब-हारीताः शङ्खः कात्यायनो गुरुः।
सुमन्तुः कश्यपो बभ्रुः पैठीना व्याघ्र एव च।
शतव्रतो भरद्वाजो गार्ग्यः कार्ष्णाजिनिस्तथा॥
जाबालिर्जमदग्निश्च लोगाक्षिर्ब्रह्मसंभवः।
इति धर्मप्रणेतारः षट्त्रिंशदृषयः स्मृताः॥

इति वचनात् षट्त्रिंशदेवर्षयो धर्मशास्त्रप्रणेतारः; तस्योपलक्षणत्वे तु अस्मदादीनामपि वेदमूलधर्मशास्त्रप्रणेतृत्वं कथं वा वारयितुं शक्यते? तथाच यदि वत्स-मरीचि-देवल-पारस्करर्ष्यशृङ्ग-शिखरछागलेयात्रेय-लिखितादीनामुक्तवचनासंगृहीतानामपि धर्मशास्त्रप्रणेतृत्वम्, तर्हि सांप्रतिकानामपि वेदाविरोधेनैव धर्मशास्त्रप्रणयनं कथं वारयितुं शक्यते? सर्वं हि कलिवर्ज्यप्रकरणम् "एतानि लोकगुप्त्यर्थं कलेरादौ महात्मभिः। निवर्तितानि कर्माणी"ति कल्युपक्रमावसरे कैश्चन महात्मभिः प्रवर्तितमेव सत् प्रमाणम्? तत्र यदि कल्यारम्भकाले महात्मनामुक्तधर्मशास्त्रप्रणेतृव्यतिरिक्तानां वचनानि प्रमाणतामर्हन्ति, तर्हि सांप्रतिकानां महात्मनामपि वचनानि कथं नाम न प्रमाणतामर्हन्ति? माधवाचार्या हि—शास्त्रोक्तब्राह्मण-क्षत्रिय-वैश्य-सच्छूद्राणां सांप्रतमदर्शनात् धर्मशास्त्राध्ययनस्य तद्व्यवस्थाया वा को वोपयोग इति पराशरमाधवीये स्वयं पर्यनुयुज्य कलिदोषकृताराधानामनालोचनेन प्रमादालस्यादिकृतदोषमात्रग्रहणेन दुष्टादुष्टनिर्णयः कर्तव्य इति वदन्तोऽप्येतत्कालीनानां ब्राह्मणादीनामपि

शास्त्रोक्तब्राह्मण्यं स्वीकुर्वन्ति, इति सांप्रतिका एतत्कालीना महात्मानो ये केचन साम्प्रतिकेभूत्तमा धर्मरक्षैकदीक्षिताः धर्मध्वजत्वमात्रमनभिनयन्तः स्वगोष्ठीबलमात्रेणोच्चैरुद्घुष्यन्तश्च लोकहितेच्छयैव धर्मोधर्मव्यवस्थार्थं प्रवर्तमाना अपि धर्मशास्त्रप्रणेतारो यदि भवन्ति, तर्हि का नाम हानिः ? कथं वा तेषां व्यवस्थापि न प्रमाणपदवामधिरोहति ? उक्तं हि पराशरेण—

"युगे युगे च ये धर्मास्तत्र तत्र च ये द्विजाः ।
तेषां निन्दा न कर्तव्या युगरूपा हि ते द्विजाः ॥" इति ।

अनेन तु ज्ञायते तत्तद्युगधर्माणां व्यवस्थापने तत्तद्युगीयधर्मज्ञानां संपूर्णोऽधिकारः, तदीयैव व्यवस्था तदा तदा प्रमाणतामर्हतीति च । नहि पराशराद्य एव प्रमाणम्, नाधुनातनाः पण्डिता इत्यत्र कापि विनिगमना । धर्मरक्षैव यदि लक्ष्यमधुनातनानामपि पण्डितोत्तमानाम्, तर्हि लोकगुप्त्यर्थं तदीयाऽपि व्यवस्था कथमप्रमाणतामर्हति ?

स्मृतिपुराणानां मीमांसापद्धत्या धर्मप्रमाणतेति हि सांप्रतिकाः सनातनधर्मनेतृत्वमभिनयन्तो वर्णाश्रमस्वराज्यसङ्घपण्डितपरिषत्सदस्या अपि मन्यन्ते । इदमेवात्रालोचनीयम्—कथमिदं कलिवर्ज्यप्रकरणं मीमांसापद्धत्या प्रमाणतामर्हतीति ।

मीमांसायां हि क्लृप्त-कल्पितशास्त्रयोर्न समबलत्वम्, अतः क्लृप्तशास्त्रविरोधे कल्पितशास्त्रमनवसरमेव भवति, इति हेतुमन्निगदाधिकरणादौ प्रतिपाद्यते । तत्र हि "तेन ह्यन्नं क्रियते" इत्यस्य विधायकत्वं स्वीकृत्य शूर्प-दर्वी-पिठरादीनां होमसाधनत्वं विकल्पेनाशङ्क्य क्लृप्तत्वाद् शूर्पविधेः दर्वी-पिठरादिविधीनां च कल्पनीयत्वात् क्लृप्त-कल्पितयोः समबलत्वाभावाद् न विकल्पः संभवतीति व्यवस्थापितम् । तत्र क्लृप्तशास्त्रस्य सर्वथाऽबाधेन कल्पितशास्त्रप्रामाण्यस्यैव बाधे, कैव प्रवृत्तस्य कथा क्लृप्तशास्त्रस्य सर्वथा बाधेन

कलिवर्ज्यप्रकरणस्य सर्वस्य सर्वयुगसाधारण्येन प्रवृत्तानां विधीनां कलिकाले सर्वथा बाधव्यवस्थापरस्य कल्पितस्य प्रामाण्ये ? इति कथं वा प्रामाण्यं मीमांसापद्धत्याऽवसेयम् ?

अथ यदि—"आख्यातानामर्थं ब्रुवतां शक्तिः सहकारिणी"ति मीमांसान्यायेन प्रथमाध्यायतुरीयचरणान्तिमेन कलिकाल उक्तानां कर्मणामनुष्ठानासामर्थ्यं सर्वसाधारणमुपलक्ष्य तेषु तेषां वचनानामप्रवृत्त्या धर्माणामपि केषांचन निवर्तनं कृतमिति कलिवर्ज्यप्रकरणं प्रमाणमिति मन्यते, तर्हि शक्तविषये कलिवर्ज्यप्रकरणमप्रमाणम्, अशक्तविषय एव प्रमाणमिति स्वीकर्तव्यम्, अन्यथा दीर्घकालब्रह्मचर्यादीनां कलिकाले वर्जितानामप्यनुष्ठातारः कति कति सनातनधर्मनेतारः कलिवर्ज्यप्रकरणं स्वविषयेऽप्रमाणमेव मन्वानाः महतीं दुर्दशां प्राप्नुयुः, इति सांप्रतमपि केचन कलिवर्जितानामपि केषांचन कर्मणामनुष्ठानेन प्रत्यवायभागिन एवेति कथं न वक्तुं शक्नुमः ?

इदमप्यत्रालोचनीयम्—यत्—"आख्यातानामर्थं ब्रुवतां शक्तिः सहकारिणी"ति न्यायः किं विधिशास्त्राण्येव विषयीकरोति ? उत निषेधशास्त्राण्यपि ? अन्त्ये आतुरादिविषय उपरागादौ निषिद्धकालेऽपि भोजनाभ्यनुज्ञादिविषयो नोपपद्येरन्। आद्ये तु यथा कलिवर्ज्यप्रकरणं विहितविषयम्, एवं निषिद्धविषयमपि कल्पयितुं शक्यते, इति निषिद्धानामपि कर्मणां निषेधेन, कर्मविशेषाणां निवर्तनमिव प्रवर्तनमपि न्यायसाम्येन न विरुद्धं भविष्यति, इति कलियुगस्यारम्भकालेऽशक्तिमनुष्ठाने समालोच्य कानिचन कर्माणि यथा निवर्तितानि, एवमिदानीन्तनीयाशक्तिमालोच्य कानि चनापराण्यपि कर्माणि वर्जनीयानि यदि भविष्यन्ति, तर्हि पण्डितपरिषत् शुद्धसनातनधर्मानुयायिनामपि कानिचन वर्जयितुमर्हति ? नवा ? यदि अर्हति, तर्हि निषिद्धानामधर्माणामपि करणाभ्यनुज्ञानं कथं न तस्याः कर्तव्यम् ?

सति चैवम्—कलिवर्ज्यप्रकरणं सर्वमपि यदि पूर्वोक्तन्यायेनैव प्रमाणम्, तर्हि अकरणे तेषामशक्तौ दोषाभावप्रतिपादनद्वाराऽकरणाभ्यनुज्ञानमेव कलिवर्ज्यप्रकरणार्थः, नतु करणे श्रौतनिषेधानामिव प्रत्यवायप्रतिपादनपर्यन्तम्। पुण्य-पापयोरतीन्द्रियत्वेन महर्षीणामपि बुद्ध्यगोचरत्वस्यैव मीमांसकसम्मतत्वेन तावत्पर्यन्तताया असंभवात्। तथाच निषिद्धानामपि कर्मणां कालविशेषेणानुष्ठानाभ्यनुज्ञानं कथमपि न दुष्यम्। दृश्यन्ते हि—"न दीक्षितस्यान्नमश्नीयात्" इति निषेधस्यापि "हुतायां वपायां दीक्षितस्यान्नमश्नीयात्" इत्यभ्यनुज्ञानविधिनाऽव्यवधानयनं श्रौतसूत्रकाराणां स्वातन्त्र्यम्। न ह्यत्र हुतायां वपायां दीक्षितान्नभक्षणेन पुण्यमभक्षणेन पापं वा कल्प्यते। मीमांसका हि अभ्यनुज्ञाविधिस्थले करणे दोषाभावमेव मन्यन्ते, नतु गुणमपीति भाट्टरहस्यादौ व्यक्तम्। तथाच विधिरूप इव निषेधरूपेऽप्यभ्यनुज्ञानेऽभ्यनुज्ञातानुष्ठाने दोषाभाव एव वाक्यार्थः, न तु तत्र गुणकल्पनं दोषकल्पनं वा। नहि कलिवर्ज्यानामनुष्ठाने प्रत्यवायकल्पनं संभवति। प्रत्यवायकल्पनं हि रागप्राप्तस्य शास्त्रेण निषेध एव, नतु शास्त्रप्राप्तस्य शास्त्रेण निषेधे, अन्यथा—"नातिरात्रे षोडशिनं गृह्णाती"ति निषेधाद् अतिरात्रे षोडशिग्रहणेन प्रत्यवायकल्पनापत्तेः।

कलिवर्ज्यानां प्राप्तिर्हि कलिकालेऽपि शास्त्रेणैव न रागतः, इति प्रतिषेधपक्षेऽपि विकल्प एव स्यात्, न सर्वात्मना निषेधः। *रागप्राप्तिर्हि दृष्टफलेष्वेव संभवति, नादृष्टफलेषु। एतेन—*कलिवर्ज्यप्रकरणस्य सर्वस्य पर्युदासपरतया नयनमिति वादोऽपि—परास्तः; नहि विकल्पापत्तिमात्रेण सर्वत्र पर्युदासपक्षः संभवति। "न तौ पशौ करोती"त्यत्रापि पर्युदासप्रसङ्गात्, नहि पशुभिन्ने दर्शपूर्णमासादौ तद्विधानं सार्थकम्, तस्य तत्प्रकरणागतविधिनैव लाभेन विध्यन्तरं हि निष्प्रयोजनमेव, इति न पर्युदासपक्षोऽङ्गीक्रियते।

ननु तथा कलिभिन्नयुगे वर्ज्यानां विधायकं वाक्यमेकमपि वर्तते, येन पर्युदासपक्षे विधिवैयर्थ्यं समापतेत्, अतः कलिवर्ज्यप्रकरणस्य पर्युदासपरतैवान्यथ इति वादोऽपि न सङ्गतः; यजतिष्वसामान्यादनूयाजेष्वपि प्रसक्तस्य येयजामहस्य निषेधे यथा विकल्पापत्तिः, नहि तथाऽत्र कलिकालसाधारणतया कालविशेषोपस्थापनेन कलिवर्ज्यानां विधायकं वाक्यं वर्तते, येन विकल्प आपद्येत। नहि "यावज्जीवमग्निहोत्रं जुहोती"ति वाक्यं युगचतुष्टयसाधारण्येन कंचनाधिकरोति; युगचतुष्टयव्यापिजीवनस्याप्रसक्तत्वेन साधारण्यासंभवात्। तथाच कलावग्निहोत्रनिषेधो न पर्युदासपरः; कालविशेषानुल्लेखेन प्रवृत्तानामपि वचनानां खण्डकालव्यापनार्थमेव हि कालविशेषनियमनं क्रियते, न त्वखण्डकालव्यापनार्थम्। कलिकालस्तु न खण्डकाल इति कलिभिन्नकाले कर्मविशेषाणां विधानं कलिकालीनानां महर्षीणामनवसरमेव।

वस्तुतस्तु पर्युदासत्वे कलिवर्ज्यप्रकरणस्य पर्युदस्तानामभ्युनुज्ञानमपि नैव दोषाय। तदुक्तं तन्त्रवार्तिके—

"प्रतिषिद्धाभ्यनुज्ञा च विकल्पेनैव दूष्यते।
पर्युदस्ताभ्यनुज्ञानं तस्मादिष्टं व्यवस्थया" ॥ इति ॥

दीक्षितस्याभोजननियमो हि श्रेयोऽर्थिनां विधीयते।

"पाश्चात्यभोजनानुज्ञा नान्यथाप्युपपद्यते।
अदृष्टार्थप्रमक्तित्वाद् न विधिद्वयमिष्यते।
एवं विषयनानात्वादविरोधसमर्थनम्।" इति

अस्मिंश्च पक्षे धर्मज्ञानां धर्मसंकोचेऽशक्तिमनुसृत्य, शास्त्रस्तु पष्टम्भे निवर्तितधर्माभ्यनुज्ञाने वाऽधिकारः, न तु प्रतिषेधे विधाने वा। कलिवर्ज्यप्रकरणं हि किञ्चित् पुराणेषूपलभ्यते, किञ्चित्तु शौनकोपादौ धर्मज्ञसमयत्वेन। पौराणिकस्य कलिवर्ज्यप्रकरणस्य विषये 'यथाकथंचित्प्रामाण्येऽपि धर्मज्ञसमयकलिवर्ज्यप्रकरणस्य

कथं नाम प्रमाणत्ता ? उक्तं ह्यन्यत्र धर्मज्ञसमयः प्रमाणमिति ॥ कथं धर्मज्ञानां श्रुति-स्मृति-पुराणेतिहासादिषु सन्दिग्धानामर्थानां व्यक्तिविशेषे सन्दिग्धप्रायश्चित्तविशेषाणां वा व्यवस्थायामेवाधिकारं बोधयति, नतु धर्माधर्मपरिवर्तनेऽपि तेषामधिकारम्, इति। सति चैवं धर्मज्ञानां स्वतन्त्रधर्माधर्मपरिवर्तनं शौनकीयादिगतं यदि प्रमाणम्, तर्हि सांप्रतमपि पण्डितानामलक्षाणां धर्मकामानां च धर्माधर्मपरिवर्तनं कथं नाम न समादरमर्हति ?

धर्मज्ञसमयकलिवर्ज्यप्रकरणं हि—

"एतानि लोकगुप्त्यर्थं कलेरादौ महात्मभिः ।
निवर्तितानि कर्माणि व्यवस्थापूर्वकं बुधैः ॥
समयश्चापि साधूनां प्रमाणं वेदवत् भवेत् ॥"

इत्युपसंहृतं लोकरक्षार्थं पण्डितानामपि धर्माधर्मपरिवर्तनेऽधिकार इति व्यवस्थापयति ।

आपस्तम्बधर्मसूत्रं हि "धर्मज्ञसमयः प्रमाणम् वेदाश्च ।" इति प्रथमं धर्मज्ञसमयः, तदनन्तरं वेदं च प्रमाणतया संगृह्णत् वेदतुल्यं प्रामाण्यं धर्मज्ञसमयस्य स्वीकरोति । सत्यपि प्राबल्ये वेदस्य, वेदाविरोधेन धर्मज्ञसमयस्य प्रामाण्ये न कोऽपि विरोधः । तथाच विवादं सर्वदा सर्वेष्वपि कालेषु कर्तव्यतया वेदे विधानाभावे कलिकाले निषेध इव कलिकालावच्छेदेन सर्वदा विधानाभावे कलिमध्येऽपि धर्माधर्मपरिवर्तनं न दोषायेति प्रतिभाति। कलेरादौ कैश्चन महात्मभिः कानिचन विधानानि परिवर्तितानि, इति कलिमध्येऽपि सांप्रतं केचन विद्वांसो धर्मकामा लोकगुप्त्यर्थं केषांचन विधानानां निषेधानां वा तथा न शक्नुवन्ति परिवर्तनम् ?

इदं तु शपथनिर्णयमेव—यत् कल्यारम्भकाले सर्व एव मुख्यपक्षेऽनधिकारिण आसन्निति, अत इदमवश्यं स्वीकर्तव्यम्—यत् बहूनां परिस्थितिमालोच्यैव विधानव्यवस्था तदानीमपि

पण्डितैः कृतेति। सति चैवम्—अधुनातना अपि पण्डिता बहूनां परिस्थितिं कालदेशाद्यनुसारिणीमुपलक्ष्यान्ततो गत्वा प्रत्यक्षवेदवाक्याविरोधमात्रं लक्ष्यीकृत्य धर्मज्ञसमयस्य विधि-निषेधविशेषाणां परिवर्तनं यदि कुर्वन्ति, तर्हि कथं नामायमपि धर्मज्ञसमयो न प्रमाणतामर्हति ?

वस्तुतस्तु कलिवर्ज्यप्रकरणस्य सामान्यतः प्रवृत्तस्य कालविशेषपर्यन्तं प्रवर्तनम्, कालविशेषं पुरस्कृत्य निवर्तितानामपि तत्रैव समयेऽवस्थाविशेषं पुरस्कृत्य प्रवर्तनं च धर्मज्ञानामपि दृश्यत एव। अत एव—"अग्निहोत्रं गवालम्भं संन्यासं पलपैतृकम्। देवरेण सुतोत्पत्तिः कलौ पञ्च विवर्जयेत्," इति कलिकालावच्छेदेन प्रथमतः सर्वथा निवर्तनम्।

चत्वार्यब्दसहस्राणि चत्वार्यब्दशतानि च।
कलौ यदा गमिष्यन्ति तदा त्रेतापरिग्रहः।
संन्यासश्च न कर्तव्यो ब्राह्मणेन विजानता॥"

इति कलावेव पञ्चसहस्रवत्सरपर्यन्तं निवर्तितस्यैव प्रवर्तनम्, तदनन्तरं निवर्तनम्, पुनरपि—

"यावद्वर्णविभागस्तु यावद्वेदः प्रवर्तते।
संन्यासं चाग्निहोत्रं च तावत्कुर्यात् कलौ युगे॥"

इति पञ्चसहस्रवत्सरानन्तरं निवर्तितानामपि प्रवर्तनं च पण्डितानामुपपद्यते, यदनुसरणेनैव धर्माचार्याः संन्यासिप्रवराः शङ्करभगवत्पादादयश्चेदानीं धर्माचार्यपदमपि स्वीयं गौरवाय मन्यन्ते। एवं च धर्मज्ञसमयः वाक्यशास्त्यापस्तम्बादिकं बहूनामुपलभ्य कालदेशपरिस्थित्यनुगुणं विधिनिषेधपरिवर्तनायाप्यलमिति।

इदमत्रावधेयं यत् कलिवर्ज्यप्रकरणस्य तत्र तत्र विद्यमानस्य संग्रहणं नाम, येन कियदपि तस्य प्रामाण्यमनुष्ठानपर्यवसायि वृद्धाः सनातनधर्मिणोऽपि स्वीकुर्वन्तीति विचारयितुं

शक्येत। एकस्मिन् कलिवर्ज्येऽक्षिनिमीलनम्, अपरत्र तु कलिवर्ज्ये विशिष्टा दृष्टिरिति विषमा दृष्टिस्तु येषाम्, ते हि न धर्मज्ञाः न वा धर्माधर्मव्यवस्थापका भवितुमर्हन्ति। यदा तु वैदिकानामपि विधीनां परिवर्तनं काल-देशपरिस्थित्यनुसारेण धर्मज्ञानां न दोषाय, तदा कैव कथाऽऽगमादिनिबन्धानां पौरुषेयाणां परिवर्तने।

धर्मज्ञसमयो नाम—वेदानुसारिस्मृत्यादयः, काल-देशपरिस्थितिमनुसृत्य धर्मज्ञानां विधानादिपरिवर्तनं चेति स्मृत्यादिसमानयोगक्षेमं प्रामाण्यं धर्मज्ञसमयस्य स्वीकर्तव्यम्। तथाच स्मृत्यधिकरणन्यायेनैव धर्मज्ञसमयस्यापि प्रामाण्यम्। अत एव—"धर्मज्ञसमयः प्रमाणं वेदाश्चेति" प्रमाणत्रयस्यैव संग्रह आपस्तम्बधर्मसूत्रेषु। तत्र श्रुति-स्मृत्योर्विरोधे स्मृत्यप्रामाण्यम्, स्मृत्योर्विरोधे विकल्पः, स्मृत्याचारयोर्विरोध आचारस्याप्रामाण्यम्, इति रीत्या श्रुति-धर्मज्ञसमययोर्विरोधे धर्मज्ञसमयाप्रामाण्यम्, स्मृति-धर्मज्ञसमयोर्विरोधे विकल्पः, इत्यादिरूपैव व्यवस्था स्वीकर्तव्या। सति चैवमिदानीन्तना अपि धर्मज्ञाः श्रुत्यविरोधमात्रं प्रतीक्ष्य यदि समयविशेषान् व्यवस्थापयन्ति, तर्हि तदप्रामाण्यकल्पनं कथमप्यागमादिविरोधमात्रं दृष्ट्वा न संभवति।

तदत्र कलिवर्ज्यप्रकरणं तत्र तत्राम्नायमानमनूद्य तदुपरि स्वीयान् विचारान् संग्रहीष्यामः; येन धर्मज्ञानां कर्तव्याकर्तव्ये साम्यमेव निर्धार्येयाताम्।

इमानि पराशरस्मृतिव्याख्यायां दृश्यमानानि वाक्यानि प्रथमाध्यायत्रयस्त्रिंशश्लोकव्याख्यावसरगतानि सर्वेषामालोचनमर्हन्ति। तानि यथा—"यथा कृतादौ गवालम्भादिधर्माणां लोकविरोधेऽपि व्यासादिद्विजानां चाऽनेकनिषिद्धधर्मानुष्ठातृत्वेऽपि न निन्दा कर्तव्या; प्रभावाधिक्येन तत्कालानुरूपत्वात्। तदुक्तमापस्तम्बेन—

"तेषां तेजोविशेषेण प्रत्यवायो न विद्यते ।
तदन्वीक्ष्य प्रयुञ्जानः सीदत्यवरको जनः" इति ।

तथा कलिधर्माणामपि स्वयंकर्षण-वेदैकदेशाध्ययनादीनां तदनुष्ठातॄणां द्विजानां च निन्दा न कर्तव्या; अल्पप्रभावत्वेन कलिकालानुरूपत्वादिति । तदाह बृहत्पराशरः—

"युगे युगे तु ये धर्मास्तेषु धर्मेषु ये द्विजाः ।
ते द्विजा नावमन्तव्या युगरूपा हि ते द्विजाः ।" इति ।

यतो युगरूपा इति हेतुः, अत एव युगाननुरूपा धर्मा द्विजाश्च प्रतिषिद्धाः । तथथा ब्रह्मपुराणे—

"दीर्घकालं ब्रह्मचर्यं धारणं च कमण्डलोः ।
गोत्राद् मातृसपिण्डाच्च विवाहो गोवधस्तथा ॥
नराश्वमेधौ मद्यं च कलौ वर्ज्यं द्विजातिभिः ॥"

तथा—"देवराच्च सुतोत्पत्तिर्दत्ता कन्या न दीयते ।
न यज्ञे गोवधः कार्यः कलौ न च कमण्डलुः"—इति ।

बृहन्नारदीयेऽपि—

"समुद्रयातुःस्वीकारः कमण्डलुविधारणम् ।
द्विजानामसवर्णासु कन्यासूपगमं तथा ॥
देवराच्च सुतोत्पत्तिः मधुपर्के पशोर्वधः ।
मांसदानं तथा श्राद्धे वानप्रस्थाश्रमस्तथा ॥
दत्ताक्षताया: कन्यायाः पुनर्दानं परस्य च ।
दीर्घकालं ब्रह्मचर्यं नरमेधाश्वमेधकौ ॥
महाप्रस्थानगमनं गोमेधश्च तथा मखः ।
इमान् धर्मान्कलियुगे वर्ज्यानाहुर्मनीषिणः ।" इति ॥

शौनकीये धर्मज्ञसमयेऽपि—

"विहितान्यपि कर्माणि धर्मलोपभयाद् बुधैः ।
समापने निवृत्तानि साध्यभावात्कलौ युगे ॥

विधवायां प्रजोत्पत्तौ देवरस्य नियोजनम् ।
बालिकाक्षतयोन्योश्च वरेणान्येन संस्कृतिः ॥
कन्यानामसवर्णानां विवाहश्च द्विजातिभिः ।
आततायिद्विजाग्र्याणां धर्मयुद्धेन हिंसनम् ॥
द्विजस्याब्धौ तु नौयातुः शोधितस्यापि संग्रहः ।
सत्रदीक्षा च सर्वेषां कमण्डलुविधारणम् ॥
महाप्रस्थानगमनं गोसंज्ञप्तिश्च गोसवे ।
सौत्रामण्यामपि सुराग्रहणस्य च संग्रहः ॥
अग्निहोत्रहवण्याश्च लेहो लीढापरिग्रहः ।
वानप्रस्थाश्रमस्यापि प्रवेशो विधिचोदितः ॥
वृत्तस्वाध्यायसापेक्षमघसङ्कोचनं तथा ।
प्रायश्चित्तविधानं च विप्राणां मरणान्तिकम् ॥
संसर्गदोषः स्तेयान्यमहापातकनिष्कृतिः ।
वरातिथि-पितृभ्यश्च पशूपाकरणक्रिया ।
दत्तौरसेतरेषां तु पुत्रत्वेन परिग्रहः ॥
सवर्णान्याङ्गनादुष्टैः संसर्गः शोधितैरपि ।
अयोनौ संग्रहे वृत्ते परित्यागो गुरुस्त्रियाः ॥
परोद्देशात्मसंत्याग उच्छिष्टस्यापि वर्जनम् ।
प्रतिमाभ्यर्चनार्थाय सङ्कल्पश्च सधर्मकः ॥
अस्थिसञ्चयनादूर्ध्वमङ्गस्पर्शनमेव च ।
शामित्रं चैव विप्राणां सोमविक्रयणं तथा ॥
षड्भक्तानशनेनात्र हरणं हीनकर्मणः ।
शूद्रेषु दास-गोपाल-कुलमित्रार्द्धसीरिणाम् ॥
भोज्यान्नता गृहस्थस्य तीर्थसेवाऽतिदूरतः ।
शिष्यस्य गुरुदारेषु गुरुवद्वृत्तिशालिता ॥

आपद्वृत्तिर्द्विजाग्र्याणामश्वस्तनतया तथा ।
प्रजार्थं तु द्विजाग्र्याणां प्रजारणिपरिग्रहः ॥
ब्राह्मणानां प्रवासित्वं मुखाग्निधमनक्रिया ।
बलात्कारादिदुष्टस्त्रीसंग्रहो विधिचोदितः ॥
यतेस्तु सर्ववर्णेषु भिक्षाचर्या विधानतः ।
नवोदके दशाहं च दक्षिणा विधिचोदिता ॥
ब्राह्मणादिषु शूद्रस्य पचनादिक्रियाऽपि च ।
भृग्वग्निपतनैश्चैव वृद्धादिमरणं तथा ॥
गोतृप्तिशिष्टे पयसि शिष्टैराचमनक्रिया ।
पितापुत्रविरोधेषु साक्षिणे दण्डकल्पनम् ॥
यत्र सायंगृहत्वं च मुनिभिस्तत्त्वतत्परैः ।
एतानि लोकगुप्त्यर्थं कलेरादौ महात्मभिः ॥
निवर्तितानि कर्माणि व्यवस्थापूर्वकं बुधैः ।
समयश्चापि साधूनां प्रमाणं वेदवद्भवेदि''ति ॥

अन्यत्रापि पुराणे—

ऊढायाः पुनरुद्वाहं ज्येष्ठांशं गोवधं तथा ।
कलौ पञ्च न कुर्वीत भ्रातृजायां कमण्डलुमिति ॥

निगमेऽपि—

अक्षता गोपशुश्चैव श्राद्धे मांसं तथा मधु ।
देवराच्च सुतोत्पत्तिः कलौ पञ्च विवर्जयेदिति ॥

स्मृत्यन्तरेऽपि—

देवराच्च सुतोत्पत्तिः गोमेधं च कमण्डलुम् ।
अक्षतां पौरुषं मेधं कलौ पञ्च विवर्जयेत् ॥

ब्रह्मपुराणेऽपि—

स्त्रीणां पुनर्विवाहश्च देवरात्पुत्रसन्ततिः ।
स्वातन्त्र्यं वा कलियुगे न कर्तव्यं कदाचन ॥

क्रतुरपि—

देवरेण सुतोत्पत्तिर्दत्ता कन्या न दीयते ।
न यज्ञे गोवधः कार्यः कलौ न च कमण्डलुः ॥

बौधायनोऽपि—

विधिर्यो निश्चितः पूर्वं क्रियते नेह साम्प्रतम् ।
पुराकल्पे स एतच्च विधवाया नियोजनम् ॥

हेमाद्रौ—

यथा नियोगजो धर्मो नानुबन्ध्यावधोऽपि च ।
तथोद्धारविभागोऽपि नैव संप्रति वर्तते ॥

अन्यत्रापि—

अग्निहोत्रं गवालम्भं संन्यासं पलपैतृकम् ।
देवरेण सुतोत्पत्तिं कलौ पञ्च विवर्जयेत् ॥

ब्रह्मपुराणेऽपि—

शपथाः शकुनाः स्वप्नाः सामुद्रिककुपश्रुतिः ।
उपयाचितमादेशाः सम्भवन्ति कलौ क्वचित् ॥
तस्मात्तन्मात्रलाभेन कलौ कार्यं न कारयेत् ।—इति

तत्र दीर्घकालब्रह्मचर्यं तावत्—अष्टाचत्वारिंशद्वर्षं वेदब्रह्मचर्याचरणस्यापि स्मृतावेव पक्षान्तरविकल्पोपनिबन्धनादाश्रमान्तरविपक्षत्वसम्भवाद्वा विरोधाभावः । तथाहि "वेदानधीत्य वेदौ वा वेदं वापि यथाक्रमम् । सामर्थ्याश्रमयोग्यत्वमङ्गीकृत्यैतदुच्यते ॥

स्मृति नैवं दीर्घकालब्रह्मचर्यणश्चस्य वैकल्पिकत्वात्, कलौ तदधिकारिणामसंभवात् तन्निवर्तनं कृतम्, न तु विहितप्रतिषिद्धत्वेनात्र विकल्पप्रसङ्गः, इति नात्र पर्युदासः, किन्तु प्रतिषेध एव । तथाच प्रतिषेधपक्षस्याभ्यनुज्ञानमेवात्र क्रियते, नतु स्वतन्त्रतया निवर्तनम् ।

एतेन—कमण्डलुधारणमपि—व्याख्यातम्; तत्तु स्नातकानां

मृन्मयकरकधारणं न केवलादृष्टार्थम्, इति दृष्टार्थे निषेधाभ्यनुज्ञानमपि न दोषाय। यस्तु मातुलकन्यापरिणयनिषेधः, सोऽपि मातुलकन्यापरिणयस्य विधि-निषेधाभ्यां विकल्पाद् एकतरपक्षाभ्यनुज्ञानमेवेति वीरमित्रोदयादयः। एतेन—गोवधोऽपि—व्याख्यातः; तस्यापि मुख्यस्य लोकविरोधेन निषेध एव तात्पर्यात्। अत एव—

"मधुपर्किकपश्वर्थे ततो मात्रां प्रकल्पयेत्।
सहिरण्यं बीजपात्रं द्रविणेन सदैव तु॥

पशुः कलौ न कर्तव्य इत्याह भगवान् भृगुरि"ति मार्कण्डेयवचनम्। तथाचायमपि शक्त्यभावनिमित्त एव निषेधः। एतेन—नरमेधाश्वमेधावपि—व्याख्यातौ। मद्यनिषेधस्तु—सौत्रामण्यादौ मद्यविषयः। सोऽपि मद्यपानेऽनियंत्रिते दोषसंभावनयैव। अत्र मद्यशब्देन पैष्ट्येव सुरा निषिद्ध्यते, पानसादीनां तु न निषेधः।

यथाह पुलस्त्यः—

पानसं द्राक्षमाद्रूकं खार्जूरं तालमैक्षवम्।
मधूत्थं सैरमारिष्टं मैरेयं नारिकेलजम्।
समानानि विजानीयात् मद्यान्येकादशैव तु॥

सर्वाणीमानि द्विजातिभिस्त्रिभिर्मूर्धावसिक्तादिभिः पञ्चभिरनुलोमजैः कलौ वर्ज्यानि। तत्र ब्राह्मणस्य सर्वयुगेषु निषेधे विद्यमानेऽपि पुनर्निषेधोऽनन्यसाध्यव्याध्युपशमार्थं यद् मद्यमभ्यनुज्ञातम्, तस्यापि कलौ निषेधः। तथाच धान्वन्तरिः—

"मद्यप्रयोगं कुर्वन्ति शूद्रादिषु महार्तिषु।
द्विजैस्त्रिभिस्तु न प्राश्यं यद्यप्युज्जीवयेन्नरम्॥" इति।

तथाच—विकल्पपक्षयोरेकतरव्यवस्थापनेन, नित्येष्वप्यशक्त्यभिप्रायेण वा कलिवर्ज्यप्रकरणं प्रवृत्तमिति ज्ञायते। सति चैवमगतिमालोच्य निषिद्धानामभ्यनुज्ञान एव धर्मज्ञानामधिकारः, नतु स्वयं शास्त्रतो निषिद्धानामप्यभ्यनुज्ञाने। निषिद्धानामनुष्ठान-

मपि यद्यप्यापत्कल्पतया कुत्र कुत्रचनाभ्यनुज्ञायते, परंतु तदपि यावद्विपत्त्येव। आपत्स्वरूपं तु प्राणात्ययप्रसङ्ग एव। व्यक्तं चैतद् ब्रह्मसूत्रे—"सर्वान्नानुमतिस्तु प्राणात्यये" इत्यत्र।

एतेनाग्निहोत्र-संन्यासावपि व्याख्यातौ। कल्यारम्भकाल एवाशक्यानुष्ठानमग्निहोत्रं दृष्ट्वा संन्यासं च, निवर्तनम्, ततः शक्यानुष्ठानतामुपलक्ष्य यावद्वर्णविभागादिकं प्रवर्तनं च कृतम्। अत्र निषिद्धस्याधर्मस्य न धर्मतया परिवर्तनम्, किन्तु धर्मस्यैव सतः प्रमाणान्तरावगतस्य प्रवर्तनम्, इति सर्वविदितमिदम्। तथाच धर्मज्ञानां धर्मस्य निवर्तने इवाधर्मस्य प्रवर्तने न कोऽप्यधिकारः।

सति चैवं कलिवर्ज्यप्रकरणं सत्कलशास्त्रस्य सर्वथा बाधनेन न प्रवर्तते, किन्तु यावदशक्ति तन्निवर्तनेनैव। इदं तु—"आख्यातानामर्थं ब्रुवतां शक्तिः सहकारिणी"ति न्यायेनैव, इति कलिवर्ज्यप्रकरणं न मीमांसान्यायाननुसारि यथेच्छं केषांचन कल्पनामात्रं धर्मज्ञानाम्।

इदमनेन सिद्धम्—यत् कलिवर्जितस्यापि दीर्घकालब्रह्मचर्यादेर्विहितस्यानुष्ठाने आत्मनः शक्तिमुपलक्ष्य यथानियममनुष्ठातारो धर्माचार्यास्सर्वेऽपि धीरोदात्ताः कथं दुर्दशां महतीं प्राप्स्यन्ति। प्रत्युत मुख्यधर्मानुष्ठातारो हि ते शक्ताः निःश्रेयसमेव परमं प्राप्स्यन्ति। कलिवर्ज्यप्रकरणं हि अशक्तविषय एव प्रमाणम्, नतु शक्तविषयेऽपि।

सत्यमाख्यातानामर्थं ब्रुवतां शक्तिः सहकारिणीति न्यायो निषेधशास्त्रमपि विषयीकरोति। तदुक्तम् वार्तिके—

"जघनानापादि छार्तो विश्वामित्रः श्वजाघनीम्।
तथाच मनुनाप्युक्तमापद्गतं प्रति।
तत्रत्यपापदोषाणामन्ते शौचं भविष्यति"। इति।

तथाच निषिद्धानां तात्कालिकमभ्यनुज्ञानमपि न सर्वात्मना

दोषाभावं गोचरयितुमर्हति, यथा विहितानामशक्त्या वर्जितानामकरणे दोषाभावम्। निषेधाभ्यनुज्ञानविशेषस्तु विधि-निषेधयोरशक्त्या परिवर्तने वर्तते। तदुक्तम्—

"श्रेयसे विहितं धर्म्यं न सर्वत्र निषिद्ध्यते।" इति।

सति चैवं पण्डिता उक्तन्यायेन धर्माणामनुष्ठानेऽशक्तिमुपलभ्य निवर्तकाः; शक्तस्यैव कर्मण्यधिकारात्, अशक्तस्यानधिकारात्, न ह्यनधिकारिणा कृतं कर्म फलाय कल्पत इति न्यायसिद्धं फलाभावमात्रमनुवदन्ति, नतु निवर्तितानां करणे दोषमपि मन्यन्ते। अधर्मस्याप्यभ्यनुज्ञानेन तु नाधर्मानुष्ठानजं दोषमपि निषेधन्ति, किन्तु पश्चात् प्रायश्चित्तापहेयत्वमेव दोषस्य मन्यन्त इति विधि-निषेधयोः परिवर्तने महदन्तरं वर्तते। शक्तापद्यपि निषिद्धमननुतिष्ठन् स्वप्राणमपि तृणाय मन्वानः प्रत्यवायी भवति, प्रत्युत सुकृती। तदुक्तम्—

"न जातु कामाद् न भयाद् न लोभात्
धर्मं जह्याद् जीवितस्यापि हेतोः"॥ इति॥

तथाचापद्यपि अधर्ममननुतिष्ठन् न निष्प्रयोजनो भवति। अशक्तस्तु धर्ममनुष्ठातुमनुतिष्ठन् अनधिकारित्वाद् निष्प्रयोजन एव भवति। सति चैवं पूर्वोक्तन्यायेन निषिद्धानां पुनरपि प्रवर्तनम्, धर्मज्ञनिवर्तितानामेव, न शास्त्रनिवर्तितानाम्, इति शास्त्रनिषिद्धानां परिवर्तने न धर्मज्ञाः प्रभवः। सत्यं शास्त्रप्राप्तस्य शास्त्रेण निषेधासंभवः। नहि कलिवर्ज्यप्रकरणं शास्त्रप्राप्तस्य निषेधपरम्, किन्तु अशक्तौ शास्त्रस्याप्रवृत्तिमुक्तन्यायसिद्धामवलम्ब्याशक्तेषु, शास्त्रविशेषाणामप्राप्तिसिद्धस्याधिकाराभावस्यानुवादकम्। ततश्च कलिवर्ज्यप्रकरणं सर्वं पर्युदासपरमेव, नतु प्रसज्यप्रतिषेधपरम्, इति न विकल्पापत्तिः।

यत्र विकल्पः पर्युदासपक्षेऽप्यपरिहार्यः, तत्रैवागत्या विकल्प-




एवं प्रजानां हि पितैक एव
पित्रेकभावाद् न च जातिभेदः ॥
फलान्यथोदुम्बरवृक्षजातेः
यथाग्रमध्यान्तभवानि यानि ।
वर्णाकृतिस्पर्शरसैः समानि
तथैकतो जातिरिति प्रचिन्त्या ॥
ये कौशिकाः काश्यप-गौतमाश्च
कौण्डिन्य-माण्डव्य-वसिष्ठगोत्राः ।
आत्रेय-कौत्साङ्गिरसः सगर्गाः
मौद्गल्य-कात्यायन-भार्गवाश्च ॥
गोत्राणि नानाविधजातयश्च
भ्रातृ-स्नुषा-मैथुनपुत्रभावाः ।
वैवाहिकं कर्म न वर्णभेदाः
सर्वाणि शिल्पानि भवन्ति तेषाम् ॥
ये चान्ये पण्डिताः प्राहुर्देहब्राह्मणतां नराः ।
तेषां दुर्दृष्टितिमिरमपनीयानुकम्प्य च ॥
न्यायाञ्जनौषधैर्दिव्यैः परिणामसुखावहैः ।
उपनीतैः प्रयत्नेन सुदृष्टिं संविदध्महे ॥
मूर्तिमत्त्वाच नाशित्वं नाशित्वाच्छेपभूतिवत् ।
देहाधारनिविष्टानां ब्राह्मण्यं न प्रकल्प्यते ॥
एकैकोऽवयवस्तेषां न ब्राह्मण्यं समश्नुते ।
न चानेकसमूहेऽपि सर्वथाऽतिसङ्गतः ॥
पृथिव्युदकवाय्वग्निपरिणामाविशेषतः ।
देहतः सर्वभूतानां ब्राह्मणत्वप्रसङ्गतः ॥
देहस्य ब्राह्मणत्वं यैरतत्त्वज्ञैः प्रकल्प्यते ।
संस्कर्तृणां शरीरस्य तेषां न ब्रह्मता भवेत ॥




एवं प्रजानां हि पितैक एव
पित्रेकभावाद् न च जातिभेदः ॥
फलान्यथोदुम्बरवृक्षजातेः
यथाग्रमध्यान्तभवानि यानि ।
वर्णाकृतिस्पर्शरसैः समानि
तथैकतो जातिरिति प्रचिन्त्या ॥
ये कौशिकाः काश्यप-गौतमाश्च
कौण्डिन्य-माण्डव्य-वसिष्ठगोत्राः ।
आत्रेय-कौत्साङ्गिरसः सगर्गाः
मौद्गल्य-कात्यायन-भार्गवाश्च ॥
गोत्राणि नानाविधजातयश्च
भ्रातृ-स्नुषा-मैथुनपुत्रभावाः ।
वैवाहिकं कर्म न वर्णभेदाः
सर्वाणि शिल्पानि भवन्ति तेषाम् ॥
ये चान्ये पण्डिताः प्राहुर्देहब्राह्मणतां नराः ।
तेषां दुर्दृष्टितिमिरमपनीयानुकम्प्य च ॥
न्यायाञ्जनोपयैर्दिव्यैः परिणामसुखावहैः ।
उपनीतैः प्र[illegible]मह ॥
मूर्तिमत्य[illegible]सुजल्पादिजनवन्मदविह्वलाः ।
देहा[illegible]न्ति सदाचाराद् ब्राह्मणत्वात्पतन्ति च ॥
संस्कृतोऽपि दुराचारो नरकं याति मानवः ।
निःसंस्कारः सदाचारो भवेद्विप्रोत्तमः सदा ॥
मन्त्रपूतात्मसंस्कारयुक्तोऽपि प्लवते न तु ।
ब्राह्मणपादविकल्पं स पश्चाद् दुश्चरितो नरः ।
सामर्थ्यात्पतनं तस्माद् ब्राह्मण्यान्मुच्यते ध्रुवम् ।
दुरनुष्ठानसक्तानां पुंसां पुरुषपुङ्गवैः ॥

किं कश्चित् दृष्टमेवैतत्किं वा स्पर्धा दधात्ययम् ।
तुल्यमुत्सहसे कर्तुमप्यदृष्टं तदा वद ॥
आचारमनुतिष्ठन्तो व्यासादिमुनिसत्तमाः ।
गर्भाधानादिसंस्कारकलापरहिताः स्फुटम् ॥
विप्रोत्तमाः श्रियं प्राप्ताः सर्वलोकनमस्कृताः ।
बहवः कथ्यमाना ये कतिचित् तान्निबोधत ॥
जातो व्यासस्तु कैवर्त्याः श्वपाक्याश्च पराशरः ।
शुक्यां शुकः कणादाख्यस्तथोलूक्याः सुतोऽभवत् ॥
मृगीजोऽथर्ष्यशृङ्गोऽपि वसिष्ठो गणिकात्मजः ।
मन्दपालो मुनिश्रेष्ठो नाविकापत्यमुच्यते ॥
माण्डव्यो मुनिराजस्तु मण्डूकीगर्भसम्भवः ।
बहवोऽन्येऽपि विप्रत्वं प्राप्ता ये पूर्ववत् द्विजाः ॥
प्रत्यैतद्यारुयरितैरर्थ्यमुचरितं वचः ।
नहियार्याचरन्नुच्चैराचारोपचितद्युतिः
हरिणीगर्भसम्भूतो ऋष्यशृङ्गो महामुनिः ।
तपसा ब्राह्मणो जातः संस्कारस्तेन कारणम् ॥
श्वपाकीगर्भसम्भूतः पिता व्यासस्य पार्थिव ! ।
तपसा ब्राह्मणो जातः संस्कारस्तेन कारणम् ॥
उलूकीगर्भसभूतः कणादाख्यो महामुनिः ।
तपसा ब्राह्मणो जातः संस्कारस्तेन कारणम् ॥
गणिकागर्भसम्भूतो वसिष्ठश्च महामुनिः ।
तपसा ब्राह्मणो जातः संस्कारस्तेन कारणम् ॥
नाविकागर्भसम्भूतो मन्दपालो महामुनिः ।
तपसा ब्राह्मणो जातः संस्कारस्तेन कारणम् ॥

प्राप्यते फलम् ॥

लब्धसंस्कारदेहाश्च महापातकिनो नराः ।
यस्मान्निवर्तते ब्रह्म तस्मात्साङ्केतिकं विदुः ॥

( इति श्री भविष्यपुराणे ब्राह्मे पर्वणि षष्टिकल्पे ब्राह्मण्यसंस्कारविवेकवर्णनं नाम द्विचत्वारिंशोऽध्यायः ४२ )

## अथ विष्णुपुराणे त्रिचत्वारिंशोऽध्यायः ।४३।

ब्रह्मोवाच—

किञ्चान्यदपरं यूयं वेदमन्त्रविदो जनाः ।
प्रष्टव्याः कस्य संस्कारे विशेषमुपगच्छत ॥
किं देहस्योत येनासौ निसर्गमलिनः स्थितः ।
शुक्रशोणितसम्भूतः शमलोद्भवकीटवत् ॥
निषेकादिश्मशानान्तैर्विविधैर्विधिविस्तरैः ।
देहिनोऽतिशयं केचिदुपगच्छन्ति मानवाः ॥
तेषां गृहमनःकायवाग्भिदुष्टैः सुचेष्टितैः ।
असंयतमनुष्याणां पक्षोऽयं दृश्यते मया ॥
वैदिकाखिलसंस्कारसारभूता द्विजातयः ।
सर्वकार्यकरान् सर्वान् वृषलानतिशेरते ॥
षण्डकर्मा विकर्मस्थो ब्रह्महा गुरुतल्पगः ।
स्तेनो गोघ्नः सुरापानः परस्त्रीरमणप्रियः ॥
मिथ्यावादी मदोन्मत्तो नास्तिको वेदनिन्दकः ।
ग्रामयाजकनिर्ग्रन्थो बहुदोषो दुरासदः ॥
निषिद्धाचारसंसेवी चोरश्चाटो मदोद्धतः ।
धूर्तो नरः शठः पापी सर्वाशी सर्वविक्रयी ॥
वाङ्मनःकायजैर्दोषैर्हता ये ब्राह्मणाधमाः ।
ते न शुद्धिं व्रजन्तीह अपि यज्ञशतैरपि ॥
शूद्राणां यान्यनिष्टानि सम्पद्यन्ते स्वभावतः ।
विप्राणामपि तान्येव निर्विघ्नानि भवन्ति च । 8461

तस्माद् मन्त्रोऽग्निहोत्रं वा वेदाः पशुवधोऽपि वा।
हेतवो नहि विप्रत्वे शूद्रैः शक्या क्रिया यथा॥
ये चापि कर्मबन्धेन बद्धाः सीदन्ति जन्तवः।
संसारानलसन्तापविक्लवीकृतमानसाः॥
ते जन्ममरणाटव्यां सुखामृतपिपासवः।
कृपणस्याश्रयेऽन्तो लभन्ते नैव निर्वृतिम्॥
चतुर्वर्गा नरा ये तु तत्तीर्थे नराधमाः।
तेषां सर्वात्मना सर्वधर्मैः साङ्कर्यमीक्ष्यते॥
शूद्रविप्रादयो योनौ न भियन्ते परस्परम्।
सर्वधर्मसमानत्वात्संस्कारादि निरर्थकम्॥
तदनुष्ठानवैधर्म्यवियोगमरणादिभिः।
असेव्यसेवनैरन्यैः शूद्रविप्रादयः समाः॥
बुद्ध्या शक्त्या स्वभावेन धर्मैर्जात्यादिभिः श्रिया।
कर्तव्यैः पुण्यपापाभ्यां शनैः सर्वशरीरगैः॥
बन्धनै रोधनैर्नानायातनोपायपीडनैः।
दण्डैरदण्डकरणैर्विषादपरिदेवनैः॥
सात्त्विकैः प्रीतिधर्माद्यै राजसैश्चित्र चेष्टितैः।
तामसैस्तापमोहाद्यैर्दूयमानाः पुनः पुनः॥
श्लेष्ममारुतपित्ताद्यैर्महाबीभत्सदर्शनैः।
क्वचिद्वृत्तिविवृत्तिभ्यामृतानृतहिताहितैः॥
अलङ्कारोपयोगेन मान्मथाद्यैर्विचेष्टितैः।
धनलाभाशया नैकजन्तुसङ्घातपातनैः॥
अधिसिद्धिगतिं यान्ति नानाविधमनोरथैः।
आत्मस्नेहपरद्वेषस्वीकृतद्रव्यरक्षणैः॥
अतिक्षोयत्व-सङ्क्षोभ-क्षुत-क्षामक्षमामयैः।
यातनोपायपैशून्यशून्यस्वोपशमैस्तथा॥

अप्रशस्तैरनुष्ठानैः समीपस्थापदः समाः ।
हिंसकाः प्राणिनः पापवितथालापभाषिणः ॥
साधूनां बाधकाः स्तेना निर्दयाः पारदारिकाः ।
नीचकर्मसमाचाराः सर्वभक्षाः पिशाचवत् ॥
दुष्कुलीना दुराचारा नृपाणामुपजीविनः ।
विप्रकार्या विकर्मस्था धनिनो दुष्टचेतसः ॥
लुब्धका हरिणान् हत्वा वासं कृत्वा यथा वने ।
तथा खादन्ति पिशुना बहवश्च मिथ्यावशात् ॥
वेदवादमधीयानाः प्राणिघाताभिशंसिनः ।
पुष्णन्ति कपटैरर्थान् वेदविक्रयिणोऽधमाः ॥
मायिनो मत्सरग्रस्ता लुब्धा मुग्धा मदोद्धताः ।
धाटाः कार्पटिकाः क्रूराः कदर्याः कलहप्रियाः ॥
वाचाटा दुष्टकुलटा अटन्तो भाटकैः सह ।
भण्डम्मन्या भटाटोपैः सङ्क्रुद्धाः सुविलुण्ठकाः ॥
पर्पटा भाटकाः जीवाः कण्टकश्लोकभाषिणः ।
विक्रीणते च विक्रेयमभक्ष्यद्रव्यभक्षिणः ॥
शूद्रकर्मानुतिष्ठन्तो निस्तपास्ते नराधमाः ।
सेवाध्यापनवाणिज्यकृष्याद्यारम्भलम्भिनः ॥
गृह्णन्तः सम्पदो बाह्या द्रव्यधान्यधनादिकाः ।
क्रोधादाभ्यन्तरान् दोषान् तथा दुष्टमनोरथान् ॥
अत्यजन्तो विशिष्टानां श्रेष्ठास्ते कचमर्दिनः ।
नोपादेयानि वस्त्राणि नित्यमाददते द्विजाः ॥
हापयन्ति न हेयानि कथं ते गुरवः क्षितौ ।
दण्डिकादण्डिकामण्डाश्चण्डाश्चण्डालचेष्टिताः ॥
वैतण्डकास्ते निघ्नन्ति यथा सिंहो मृगान् पशून् ।
निर्ग्रन्थं मुनिमालोक्य मन्यमानाः समुन्नतम् ।

परिभूयावतिष्ठन्ते धिक् तान् रिक्तान् स्ववैरिणः ॥
तस्मात्सांसारिकाः सत्त्वाश्चित्तक्लेशकलङ्किताः ।
दौःशील्यदौर्मनस्याद्यैस्तुल्यजातीयबन्धनात् ॥

शूद्रां प्ररोचते विप्रो रागिणीं मैथुनं प्रति ।
सा कामदुःखविगमे गर्भं धत्ते समागमे ॥
कामं कामातुराम्यस्तु रोचन्ते शूद्रमानवाः ।
मैथुनं प्रति ब्राह्मण्ये तेऽपि तासां सुखावहाः ॥

ये तु जात्यादिभिर्भिन्ना गवाश्वोष्ट्रमतङ्गजाः ।
ते विजातिषु नो गर्भं कुर्वतेऽपि सुखार्थिनः ॥
अनड्वानेव गोरेव कामं पुष्णाति सङ्गमे ।
घोटकाश्च रतिं सम्यक्कुर्वते वडवासु च ॥
पतिं करभमेवाप्य करभी रमते मुदा ।
गजमेव पतिं लब्ध्वा सुखं तिष्ठति हस्तिनी ॥
तिर्यग्जातिस्त्रिया साकं कुर्वाणोऽपि हि मैथुनम् ।
न तस्याः कुरुते गर्भं नरो नापि सुखासिकाम् ॥
तिरश्चा सह कुर्वाणा मैथुनं मनुजाङ्गना ।
नाधत्ते तत्कृतं गर्भं न युक्तं मैथुनं तयोः ॥
नैवं कश्चिद्विभागोऽस्ति मैथुने स्त्री-मनुष्ययोः ।
येन साक्ष्यते भेदः प्रस्फुटं द्विज-शूद्रयोः ॥

वेदपाठच्छलेनायं न क्रियाभिः प्रपद्यते ।
वसुभिर्जडसङ्घातैरविशिष्टे मदेऽहनि ॥
देहे देहिनि चामुष्मिन्नशुचावनवस्थिते ।
रागद्वेषादिभिर्दोषैरधिकं परिपीडिते ॥
कुलालचक्रवद् भ्रान्तमानसे विषयार्णवे ।
घोरदुःखभयाक्रान्ते समाजेऽनीश्वरात्मनि ॥

जन्ममृत्युजराशोकानिष्टयोगाग्निपीडिते ।
हीनसत्त्वशरीरादौ न विशेषो विभाव्यते ॥
तस्माद् मनुष्यभेदोऽयं सङ्केतबलनिर्मितः ।
ब्राह्मण्यं ब्राह्मणासङ्गाद् ब्राह्मणी चोपसेवते ॥
पतिं त्यक्त्वा सुखास्वादलालसैर्मदलालसैः ।
आसेव्यते विटं गत्वा धन्यकी चेटकैरपि ॥
ब्राह्मण्यात्मच्यवन्तेऽन्ये महापातकसेविताः ।
व्यलीककल्पनैवैषा तस्माज्जात्यादिकल्पना ॥

( इति श्रीभविष्यपुराणे ब्राह्मे पर्वणि षष्ठिकल्पे वर्णव्यवस्थानं नाम त्रिचत्वारिंशोऽध्यायः ४३ )

तदेवं भगवद्गीतासु गुणकर्मविभागत एव ब्राह्मणादिसृष्टेरभिधानात्, पौरुषस्य सूक्तस्यावैदिकत्वेन प्रामाण्याभावात्, स्मृतीनामपि मूलवचनानुपलम्भेन प्रामाण्यस्य स्वीकर्तुमशक्यत्वात्, "जन्मना जायते शूद्रः" इत्यादिषु वर्णव्यवस्थाया गुणकर्मावलम्बित्वोक्तेः, वसिष्ठादीनां ब्रह्मर्षित्वस्य विना वर्णव्यवस्थाया गुणकर्मावलम्बित्वमुपपादयितुमशक्यत्वात्, वज्रसूच्युपनिषदि गुणत एव ब्राह्मण्यप्राप्तेः प्रतिपादनात्, महाभारतादिषु च 'शूद्रयोनौ प्रजातस्य ब्राह्मणत्वप्राप्तेरभिधानात्, विश्वामित्रस्य क्षत्रयोनौ समुत्पन्नस्यापि तपसा ब्राह्मण्यप्राप्तेरवगम्यमानत्वात्, छान्दोग्योपनिषदि जाबालोपाख्याने सत्यकामस्य जाबालस्य सत्यवचनमात्रेण ब्राह्मणत्वानुमानात्, जातीनां जन्मतः सिद्धत्वेऽर्थादकृत्रिमत्वे ब्राह्मणादिभिः क्षत्रियादिषु सन्तानोत्पत्तेरनुपपद्यमानत्वाच्चेत्येवमाद्यैः कारणैर्गुणकर्मावलम्बिन्येव वर्णव्यवस्था, नैवतु जन्मावलम्बिनीति संसिद्धम्—इति ।

सोऽयमुपन्यस्तः संक्षेपतः केषांचिदर्वाचीनानां पूर्वः पक्षः ।

अवश्यं चात्र प्रतिवक्तव्यम्। तदिदानीं प्रमाणगर्भितैर्वचनैराक्षेपानेतान् क्रमशः परिहरामः।

तत्र यदुक्तं 'गुणकर्मावलम्बिन्येव वर्णव्यवस्थेत्यत्र भगवती गीतैव प्रमाणम्' इति, तन्न; अर्थस्यास्य भगवद्गीतातः कथंचिदपि साधयितुमशक्यत्वात्। तथाहि—'चातुर्वर्ण्यं मया सृष्टं गुणकर्मविभागशः'। इत्येतद्भगवद्गीतागतं पद्यार्धमेवाक्षेपकाणां कल्पद्रुमायमाणं संदृष्टम्। एतत्पुनर्नामीषामभीष्टं फलयति। यो हि पद्यार्धस्यास्योपवर्ण्यतेऽर्थोऽस्माभिर्नायमेतस्यार्थं इति। दीयतां तावत्पद्यस्यास्य भगवत्पादीयभाष्ये दृष्टिः प्रियपाठकमहाभागैः, इतीदानीं तदेवात्रोपहर्तुमिच्छामः। तद्यथा 'चातुर्वर्ण्यम्' इति। चत्वार एव वर्णाश्चातुर्वर्ण्यम्। मया=ईश्वरेण सृष्टमुत्पादितम्' 'ब्राह्मणोऽस्य मुखमासीत्' इत्यादिश्रुतेः। गुणकर्मविभागशः= गुणविभागशः कर्मविभागशश्च। गुणाः=सत्त्वरजस्तमांसि। तत्र सात्त्विकस्य सत्त्वप्रधानस्य ब्राह्मणस्य शमो दमस्तपः इत्यादीनि कर्माणि। सत्त्वोपसर्जनरजःप्रधानस्य क्षत्रियस्य शौर्यतेजःप्रभृतीनि कर्माणि। तमउपसर्जनरजःप्रधानस्य शूद्रस्य शुश्रूषैव कर्मेत्येवं गुण-कर्मविभागशश्चातुर्वर्ण्यं मया सृष्टमित्यर्थः' इति।

अत्र चादितो भगवतैव चातुर्वर्ण्यं सृष्टमित्यर्थे 'ब्राह्मणोऽस्य मुखमासीत्' इति प्रतिवादिनां शिरसि शूलं जनयन्त्येव भगवती श्रुतिः प्रमाणतयोपन्यस्ता श्रीमद्भिराचार्यैरिति नैतद्विस्मरणीयम्। ततश्चास्याः श्रुतेरनुसारेणैव लापनीय एतद्भगवद्गीतायाः पद्यार्थः, इत्यर्थादेव समायाति श्रुतौ पुनरेतस्यां भगवतो मुखादिभ्य एव ब्राह्मणादीनामुत्पत्तिराम्नायते। यथा चैतत्तथाऽग्रे स्फुटीकरिष्यामः।

अग्रेच ब्राह्मणस्य "शमो दमस्तपः" इत्यादीनि कर्माणीति भाषितमाचार्यैः, नैव पुनः शमदमादिविशिष्टो ब्राह्मण इत्यादि।

अतश्च प्रतीयते—न गुणकर्मावलम्बिनी वर्णव्यवस्थेति। यदि ह्यसावभविष्यत्, तदा चातुर्वर्ण्यसृष्टिं विवरीतुकामा आचार्याः शमदमादिसम्पन्नो ब्राह्मण इत्येवावक्ष्यन्। न चैवमवादिषुरिति सत्त्वप्रधानस्येति स्वरूपनिर्देशः। सत्त्वं हि ब्राह्मणेषु प्राधान्येन संदृष्टमिति। एवमुत्तरत्रापि द्रष्टव्यम्। अत्र च मया सृष्टमिति पदं न विस्मरणीयम्। मयैव चातुर्वर्ण्यं सृष्टम्, नैव पुनरन्येन सृज्यत इत्यर्थः।

ननु सत्त्वप्रधानस्येत्यादिकं ब्राह्मणादीनां लक्षणमेव कुतो न स्यादिति चेत्, अप्रसङ्गादित्यवबुध्यस्व। न ह्यत्र ब्राह्मणादीनां लक्षणकथनं प्रसक्तम्। चातुर्वर्ण्यसृष्टेर्भगवत्कृतत्वमेव ह्यत्र प्रतिपादयितुमिष्यत इति कुतः पुनर्ब्राह्मणस्यैव शमादीनि कर्माणि क्षत्रियस्यैव च शौर्य-तेजःप्रभृतीनीत्यादिरयं नियम इत्येतद्वक्तव्यमित्यभिप्रत्यैवः चोक्तमाचार्यैः सत्त्वप्रधानस्येत्यादि, नैव पुनर्ब्राह्मणादिलक्षणोपन्यासधियेति द्रष्टव्यम्। तदेवं सर्वथा प्रतिकूलमेव वर्णव्यवस्थाया गुणकर्मावलम्बित्वे भगवत्पादानां भाष्यम्।

अत्र च गुणकर्मविभागश इति पदं न विस्पष्टतया व्याख्यातमाचार्यैः। एतत्पुनर्गीतार्थसङ्ग्रहे श्रीमद्भिर्यामुनाचार्यैर्विवृतम्—'गुणकर्मविभागशः गुणविभागेन कर्मविभागेन च सह।' इति। बालबोधिनीकृतोऽप्येवमेवाहुः।

यत्पुनः पौरुषं सूक्तं प्रत्येव संशाप्यते—'तदेतदर्वाचीनैरेव वेदेषु प्रवेशितम्' इति, तदेतदपेशलम्; नव्यस्य सूक्तस्य वेदेषु प्रवेशे कारणाभावात्। विना हि कारणं न किञ्चिदपि कश्चित्करोतीति। न च वर्णव्यवस्थाया गुणकर्मावलम्बित्वप्रतिषेध एव कारणं भवति; प्राप्तेरेवाभावात्। तदा हि प्रतिषेधो युज्यते, यदा प्राप्तिर्भवति। प्राप्तं हि प्रतिषिध्यते नाप्राप्तमिति हि प्राहुः शास्त्रकृतः। न चास्ति वर्णव्यवस्थाया गुणकर्मावलम्बित्व-

स्य प्राप्तिः कथञ्चिदपि, येनायं प्रतिषेधो युज्येत। तत्रापि हि श्रुत्यादिषु भगवतो मुखादिभ्य एव ब्राह्मणादीनामुत्पत्तिः प्रतिपाद्यते। तत्सर्वथाऽर्वाचीनमेव पौरुषं सूक्तमिति नायमर्थ उपपन्नो भवति।

किञ्च यद्येतन्नव्यमेवाभविष्यत्, तदा नैव श्रीमदाचार्यसदृशैः प्राज्ञतमैः प्रमाणयकरिष्यत। नहि पौरुषेयाणि वचनान्यपौरुषेयतया स्वीकुर्युः प्रेक्षावन्त इति।

भवति च पौरुषस्य सूक्तस्य ऋग्वेदान्तर्गतत्वे प्रमाणं भगवती श्रुतिरेव। तथाहि श्रूयते छान्दोग्योपनिषत्सु 'तदेतदृचाभ्यनूक्तम्। तावानस्य महिमाऽतो ज्यायांश्च पुरुषः' इत्यादि। ऋक् चेयं न हि पौरुषं सूक्तमपहायान्यत्र क्वापि दृश्यते। ततश्च सिद्धमृग्वेदान्तःपातित्वं पौरुषस्य सूक्तस्येति।

यत्पुनरुच्यते—'पौरुषं सूक्तमेकमपहाय नान्यत्र क्वापि ब्राह्मणादीनां ब्रह्मणो मुखादिजन्यत्वमभिधीयत' इति, तदेतदप्यज्ञानमात्रविलसितमेव। सन्ति हि भूयस्य एवैवंविधाः श्रुतयो यासु ब्राह्मणादीनां ब्रह्मणो मुखादिजन्यत्वमभिधीयते। यथा तैत्तिरीयसंहितायाम्—

"प्रजापतिरकामयत प्रजाः सृजेयेति। स मुखतस्त्रिवृतं निरमिमीत। तमग्निर्देवताऽन्वसृज्यत। गायत्री छन्दो रथन्तरं साम ब्राह्मणो मनुष्याणामजः पशूनां तस्मात्ते मुख्या मुखतो ह्यसृज्यन्तोरसो बाहुभ्यां पञ्चदशं निरमिमीत तमिन्द्रो देवताऽन्वसृज्यत त्रिष्टुप्छन्दो बृहत्साम राजन्यो मनुष्याणामविः पशूनां तस्मात्ते वीर्यावन्तो वीर्याद्ध्यसृज्यन्त मध्यतः सप्तदशं निरमिमीत तं विश्वे देवा देवता अन्वसृज्यन्त जगतीछन्दो वैरूपं साम वैश्यो मनुष्याणां गावः पशूनां तस्मात्ते आद्या अन्नधानाद्ध्यसृज्यन्त तस्माद् भूयांसोऽन्येभ्यो भूयिष्ठा हि देवता अन्वसृज्यन्तान्तः

एकविंशं निरमिमीत तमनुष्टुप्छन्दोऽन्वसृज्यत वैराजं साम शूद्रो मनुष्याणामश्वः पशूनां तस्मात्तो भूतसंक्रामिणावश्वश्च शूद्रश्च तस्माच्छूद्रो यज्ञेऽनवक्लृप्तः” इत्यादि।

अत्र च पौरुषे सूक्त इव मुखतो ब्राह्मणस्य बाहुभ्यां क्षत्रियस्योरुतो वैश्यस्य पद्भ्यां च शूद्रस्योत्पत्तिः श्रूयते। ततश्च सुदूरं प्रक्षिप्तेऽपि पौरुषे सूक्ते कथं वा जन्मतः सिद्धत्वं वर्णव्यवस्थाया वारयितुं शक्येत ?

प्रतिपाद्यते चान्यत्रापि बहुषु श्रुतिषु परमेशेनैव विनिर्मिता ब्राह्मणादयो न तु गुणकर्माद्यनुसारेण मानुषैर्व्यवस्थापनीया इति। तथाहि श्रूयते ऐतरेयब्राह्मणे—

“प्रजापतिर्यज्ञमसृजत। यज्ञं सृष्टमनु ब्रह्मक्षत्रे असृज्येताम् ब्रह्मक्षत्रे अनु द्वय्यः प्रजा असृज्यन्त हुतादश्चाहुतादश्च। ब्रह्मैवानु हुतादः क्षत्रमन्वहुताद् एता वै प्रजा हुतादो यद् ब्राह्मणा अहुतादो यद्राजन्यो वैश्यः शूद्र इति।” यच्च भगवता सृष्टं नैतदन्येन विनिर्मातुं शक्यम्। अतश्च सत्त्वादिगुणविशिष्टानां ब्राह्मणादिविधानं सर्वथाऽप्रामाणिकमेव।

वाजसनेयिब्राह्मणेऽपि श्रूयते—

“ब्रह्म वा इदमग्र आसीदेकमेव तदेकं सन्न व्यभवत् तच्छ्रेयो रूपमत्यसृजत क्षत्रं यान्येतानि देवत्रा क्षत्राणीन्द्रो वरुणः सोमो रुद्रः पर्जन्यो यमो मृत्युरीशानः। तस्मात्क्षत्रात्परं नास्ति तस्माद् ब्राह्मणः क्षत्रियमधस्तादुपास्ते राजसूये क्षत्र एव तद्यशो दधाति सैषा क्षत्रस्य योनिर्यद् ब्रह्म। तस्माद् यद्यपि राजा परमतां गच्छति ब्रह्मैवान्तत उपनिश्रयति स्वां योनिम् + + +। ११ स नैव व्यभवत् स विशमसृजत यान्येतानि देवजातानि गणश आख्यायन्ते वसवो रुद्रा आदित्या विश्वेदेवा मरुत इति। १२। स नैव व्यभवत् स शौद्रं वर्णमसृजत पूषणमियं वै पूषेयं हीदं सर्वं पुष्यति यदिदं किं

च । १३ । तदेतद् ब्रह्मक्षत्रं विट् शूद्रस्तदग्निनैव देवेषु ब्रह्माभवद् ब्राह्मणो मनुष्येषु क्षत्रियेण क्षत्रियो वैश्येन वैश्यः शूद्रेण शूद्रस्तस्मादग्नावेव वेदेषु लोकमिच्छन्ते" इत्यादि ।

अस्यायमर्थः—आदितस्तावदत्र जगत्यां ब्राह्मणजातिरेवैकाऽऽसीत् । सा पुनः परिपालनादिषु न समर्थेति तदर्थं क्षत्रियाः सृष्टाः । परिपालनमपि वित्तोपार्जनमन्तरा दुष्करम् । अतो वित्तोपार्जयितुरभावात्क्षत्रजातिरपि परिपालनकर्मणि न प्राभूत् । ततश्च विशः सृष्टाः । वित्तोपार्जनमपि परिचारकसापेक्षम् । विना हि परिचारकान्न शक्यं वित्तोपार्जनकर्म निर्वर्तयितुमिति । अतश्च परिचरणकर्मणः शूद्रा सृष्टाः इति ।

तैत्तिरीयब्राह्मणेऽपि ब्रह्मणः सकाशादेव क्षत्रादीनामुत्पत्तिः श्रूयते २-४ । ८"ब्रह्म देवानजनयत । ब्रह्म विश्वमिदं जगत् । ब्रह्मणः क्षत्रं निर्मितम् । ब्रह्म ब्राह्मण आत्मना"इति । स्पष्टार्था चेयं श्रुतिः । एवं च पुरुषसूक्त इव विभिन्नास्वपि श्रुतिषु कण्ठत एव परमात्मनः सकाशादेव ब्राह्मणादीनामुत्पत्तेः श्रवणान्नास्ति गुणकर्मावलम्बित्वं वर्णव्यवस्थाया इति सिद्धम् ।

अत्रेयं स्वत एव शङ्का समुदेति यद् ब्रह्म देवानजनयदित्यादिषु किल श्रुतिषु परमात्मना ब्राह्मणादयः सृष्टा इत्यभिधीयते । सर्गश्चोत्पत्तिः । स च गुणानुसारेण व्यवस्थापनमेव किं न स्यात । सृष्टेषु हि मनुष्येषु सत्त्वादिगुणवतां ब्राह्मणादित्वं व्यवस्थापितमित्यर्थः । पूर्वं हि ब्राह्मणादिभेदो नासीत् । स च गुणाद्यनुरोधेन परमात्मना विनिर्मितः । अतश्च सृजधातोः प्रयोगो नानुपपन्नः । तत्कथमुच्यते ब्राह्मणादीनां परमात्ममुखादिजन्यत्वमिति ।

अत्र ब्रूमः ; न खलु ब्रह्म देवानजनयत् इत्यादिषु ब्राह्मणादीनामुत्पत्तेरुपादानभूतोऽवयवविशेषो निर्दिष्टः । नैतेभ्यो वचनेभ्योऽसौ बोद्धुं शक्यः । यो हि यस्यार्थः, स ततोऽवबुध्येत ।

चायमेतेषामर्थः। अन्यूनानतिरिक्तो हि शब्दार्थो भवति। इच कथं वा ब्रह्मक्षत्रादयो विनिर्मिता; कुतश्च गात्राद्वि मिता इत्यादिकं नैतेभ्यः श्रुतिवचनेभ्यः स्फुटीभवति। ततश्चा- ानि वाक्यान्येतानि स्पष्टेन"स मुखतस्त्रिवृतं निरमिमीते"त्या किवाक्यतामापद्यन्ते। ततश्च मुखादिभ्य एव परमात्मना ह्मणादयो विनिर्मिता इत्यादिरर्थः पर्यवस्यति। ब्राह्मण एवा- ः समुत्पादितस्ततः परं च क्षत्रादयो यथाकर्म यथापेक्षं चेत्या- र्थं तु वाजसनेयिब्राह्मणतः प्रतीयते।

तदेवमतिरिच्य पौरुषं सूक्तं श्रुतिवचनैरेव सिध्यति ब्राह्मणा- ां ब्रह्मणो मुखादिजन्यत्वमिति द्रष्टव्यम्। वस्तुतस्तु पौरुष- पि सूक्तस्य अत्यन्ताःपातित्वेन दुर्निवारमेव प्रामाण्यमिति व्यम्।

अत एव भविष्योत्तरपुराणे चतुश्चत्वारिंशत्तमेऽध्याये तिवर्णनम्। तद्यथा—

ब्रह्मोवाच—

"हेयोपादेयतत्त्वज्ञास्त्यक्तान्यायपथागमाः।
जितेन्द्रियमनोवाचः सदाचारपरायणाः॥
नियमाचारवन्तस्ते हितान्वेषणतत्पराः।
संसाररक्षणोपायक्रियायुक्तमनोरथाः॥
सम्यग्दर्शनसम्पन्नाः समाधिस्था हतक्रुधः।
स्वाध्यायभक्तहृदयास्त्यक्तसङ्गा विमत्सराः॥
विशोका विमदाः शान्ताः सर्वप्राणिहितैषिणः।
सुख-दुःखसमा लोका विविक्तस्थानवासिनः॥
व्रतोपयुक्तसर्वाङ्गा धार्मिकाः पापभीरवः।
निर्ममा निरहङ्कारा दानशूरा दयापराः॥

सत्यब्रह्मविदः शान्ताः सर्वशास्त्रेषु निष्ठिताः ।
सर्वलोकहितोपायप्रवृत्तेन स्वयम्भुवा ॥
वागीश्वरेण देवेन नाभेयेन भवच्छिदा ।
ब्रह्मणा कृतमर्यादास्त एव ब्राह्मणाः स्मृताः ॥
महातपोधनैरार्यैः सर्वसत्त्वाभयप्रदैः ।
सर्वलोकहितार्थाय निपुणां सुप्रतिष्ठिताम् ॥
सृष्ट्वा भगवान् ब्रह्मा नाभेयस्तस्य ये जनाः ।
भक्त्यासक्ताः प्रपन्नाश्च ब्राह्मणास्ते प्रकीर्तिताः ॥
क्षत्रियास्तु क्षतत्राणाद्वैश्या वार्ताप्रवेशनात् ।
ये तु श्रुतेर्द्रुतिं प्राप्ताः शूद्रास्तेनेह कीर्तिताः ॥
ये चाचाररताः प्राहुर्ब्राह्मण्यं ब्रह्मवादिनः ।
ते तु फलं प्रशंसन्ति यत्सदा मानसेप्सितम् ॥
क्षमा दमो दया दानं सत्यं शौचं धृतिर्घृणा ।
मार्दवार्जवसन्तोषानहङ्कारतपःशमाः ॥
धर्मो ज्ञानमलोभत्वं [illegible]र्यमसूदता ।
ज्ञानमास्तिक्यमद्वेषो वैराग्यं च शमा[illegible]न्मता ॥
पापभीरुत्वमस्तेयममात्सर्यमतृष्णता ।
नैःसङ्ग्यं गुरुशुश्रूषा मनोवाक्कायसंयमः ॥
य एवम्भूतसमाचारमनुतिष्ठन्ति मानवाः ।
ब्राह्मण्यं पुष्कलं तेषां नित्यमेव प्रवर्धते ॥
ते स्वमनास्वादलब्धवर्णाचारा महौजसः ।
सर्वशास्त्राविरोधेन पवित्रीकृतमानसाः ॥
सज्जनाभिमताः प्राज्ञाः पुराणागमपण्डिताः ।
गीतगीतागमाचाराः स्मृतिकाराः पठन्ति च ॥
मन्वन्तरेषु सर्वेषु चतुर्युगविभागशः ।
वर्णाश्रमाचारकृतं कर्म सिध्यत्यनुत्तमम् ॥

संसिद्धायां तु वार्तायां ततस्तेषां स्वयंभुः।
मर्यादां स्थापयामास यथारब्धां परस्परम्॥
ये वै परिगृहीतारस्तेषां सत्त्वबलाधिकाः।
इतरेषां क्षतत्राणात् स्थापयामास क्षत्रियान्॥
उपतिष्ठन्ति ये तान्वै यावन्तो निर्भयाः सदा।
सत्यब्रह्म सदाभूतं वदन्तो ब्राह्मणास्तु ते॥
ये चान्येऽप्यबलास्तेषां वैश्यकर्मणि संस्थिताः।
कीलानि नाशयन्ति स्म पृथिव्यां प्रागतन्द्रिताः॥
वैश्यानेव [illegible] तानाह कीनाशान्वृत्तिमाश्रितान्।
शोचन्तश्च द्रवन्तश्च परिचर्यासु ये नराः॥
निस्तेजसोऽल्पवीर्याश्च शूद्रांस्तान् ब्रवीत्तु सः॥
ब्राह्मणक्षत्रियविशां शूद्राणां च परस्परम्।
कर्माणि प्रविभक्तानि स्वभावप्रभवैर्गुणैः॥
शमो दमस्तपः शौचं क्षान्तिरार्जवमेव च।
ज्ञानं विज्ञानमास्तिक्यं ब्रह्मकर्म स्वभावजम्॥
शौर्यं तेजो धृतिर्दाक्ष्यं युद्धे चाप्यपलायनम्।
दानमीश्वरभावश्च क्षात्रं कर्म स्वभावजम्॥
कृषिगोरक्षवाणिज्यं वैश्यकर्म स्वभावजम्।
परिचर्यात्मकं कर्म शूद्रस्यापि स्वभावजम्॥
योगस्तपो दया दानं सत्यं धर्मः श्रुतिर्घृणा।
ज्ञानं विज्ञानमास्तिक्यमेतद् ब्राह्मणलक्षणम्॥
शिखा ज्ञानमयी यस्य पवित्रं च तपोमयम्॥
ब्राह्मण्यं पुष्कलं तस्य मनुः स्वायम्भुवोऽब्रवीत्॥
यत्र वा तत्र वा वर्णे उत्तमाधममध्यमाः।
निवृत्तः पापकर्मभ्यो ब्राह्मणः स विधीयते॥

शूद्रोऽपि शीलसम्पन्नो ब्राह्मणादधिको भवेत् ।
ब्राह्मणो विगताचारः शूद्राद्धीनतरो भवेत् ॥
न सुरां सन्धयेद्यस्तु आपणेषु गृहेषु च ।
न विक्रीणाति च तथा सच्छूद्रो हि स उच्यते ॥
यद्येका स्फुटमेव जातिरपरा कृत्यात्परं भेदिनी ।
यद्वा व्याहृतिरेकतामधिगता धर्मात्स्वधर्मं ययौ ॥
एकैकाखिलभावभेदनिधनोत्पत्तिस्थितिव्यापिनी ।
किन्त्वासौ प्रतिपत्तिगोचरपथं यायाद्विभक्त्या नृणाम् ॥"

( इति चतुश्चत्वारिंशोऽध्यायः )

एतेन—जन्मना जायते शूद्रः संस्कारात् द्विज उच्यत इत्यादिस्मार्तवचनान्यपि—व्याख्यातानि । एतानि हि वचनानि शूद्रपदेन शूद्रसमत्वमेव बोधयन्ति, न तु वस्तुगत्या शूद्रत्वम् । विवेचितं चैतत्तन्त्रवार्तिकेऽपि । तद्यथा—मासेन शूद्रो भवतीत्यादिकं तु ब्राह्मणकर्माधिकारप्रतिषेधार्थमिति । तथाचोक्तवचनानां ब्राह्मणनिन्दायामेव तात्पर्यम् । अत एव मनुः—

न तिष्ठति तु यः पूर्वां नोपास्ते यश्च पश्चिमाम् ।
स शूद्रवद् बहिष्कार्यः सर्वस्मात् द्विजकर्मणः ॥ १०३ ।२
यथा काष्ठमयो हस्ती यथा चर्ममयो मृगः ।
तथा विप्रोऽनधीयानस्त्रयस्ते नाम बिभ्रति ॥
अव्रतानाममन्त्राणां जातिमात्रोपजीविनाम् ।
सहस्रशः समेतानां परिषत्त्वं न विद्यते ॥ अ० १२
कात्यायनीये एकादशखण्डेऽपि—
एतत्सन्ध्यात्रयं प्रोक्तं ब्राह्मण्यं यत्र तिष्ठति ।
यस्य नास्त्यादरस्तत्र न स ब्राह्मण उच्यते ॥

पाराशरस्मृतावष्टमाध्याये—

सावित्र्याश्चापि गायत्र्याः सन्ध्योपास्त्यग्निकार्ययोः ।
अज्ञानात् कृषिकर्तारो ब्राह्मणा नामधारकाः ।

शङ्खः—ब्राह्मणा ये विकर्मस्था वैडालव्रतिकास्तथा ॥
ऊनाङ्गा अतिरिक्ताङ्गा ब्राह्मणाः पङ्क्तिदूषकाः ॥ अ० २४
गुरूणां प्रतिकूलाश्च वेदाग्न्युत्सादिनश्च ये ।
गुरूणां त्यागिनश्चैव ब्राह्मणाः पङ्क्तिदूषकाः ॥
अनध्यायेष्वधीयाना शौचाचारबहिष्कृताः ।
शूद्रान्नरससम्पुष्टा ब्राह्मणाः पङ्क्तिदूषकाः ॥

शातातपः—अलाताशी अयाजी च विप्रकीर्णो भवेद् द्विजः ।
न तारयति दातारं नात्मानं सपरिग्रहम् ॥

वसिष्ठः—समार्घं धान्यमुत्सृज्य महार्घं यः प्रयच्छति ।
स वै वार्धुषिको नाम ब्रह्मवादिषु गर्हितः ॥
अश्रोत्रिया अननुवाक्या अनग्नयो वा
शूद्रधर्माणो भवन्ति । अ० ३ । १ ।
नास्तिकः पिशुनश्चैव कृतघ्नो दीर्घरोषकः ।
चत्वारः कर्मचण्डाला जन्मतश्चापि पञ्चमः ॥

वर्णधर्मप्रकरणे लघ्वाश्वलायनः—

यश्च कर्मपरित्यागी पराधीनस्तथैव च ।
अधीतोऽपि द्विजश्चैव स च शूद्रसमो भवेत् ॥

प्रथमप्रश्ने पञ्चमाध्याये बोधायनः—

गोरक्षकान् वाणिजकांस्तथा कारुकुशीलवान् ।
प्रेष्यान् वार्धुषिकांश्चैव विप्रान् शूद्रवदाचरेत् ॥

अष्टमाध्याये पराशरः—

ग्रामस्थानं यथा शून्यं यथा कूपस्तु निर्जलः ।

शूद्रोऽपि शीलसम्पन्नो ब्राह्मणादधिको भवेत् ।
ब्राह्मणो विगताचारः शूद्राद्धीनतरो भवेत् ॥
न सुरां सन्धयेद्यस्तु आपणेषु गृहेषु च ।
न विक्रीणाति च तथा सच्छूद्रो हि स उच्यते ॥
यद्येका स्फुटमेव जातिरपरा कृत्यात्परं भेदिनी ।
यद्वा व्याहृतिरेकतामधिगता पश्चान्यधर्मं ययौ ॥
एकैकाखिलभावभेदनियनोत्पत्तिस्थितिव्यापिनी ।
किन्नासौ प्रतिपत्तिगोचरपथं यायाद्विभक्त्या नृणाम् ॥"

( इति चतुश्चत्वारिंशोऽध्यायः )

एतेन—जन्मना जायते शूद्रः संस्करात् द्विज उच्यत इत्यादिस्मार्तवचनान्यपि—व्याख्यातानि । एतानि हि वचनानि शूद्रपदेन शूद्रसमत्वमेव बोधयन्ति, न तु वस्तुगत्या शूद्रत्वम् । विवेचितं चैतत्तन्त्रवार्तिकेऽपि । तद्यथा—मासेन शूद्रो भवतीत्यादिकं तु ब्राह्मणकर्माधिकारप्रतिषेधार्थमिति । तथाचोक्तवचनानां ब्राह्मणनिन्दायामेव तात्पर्यम् । अत एव मनुः—

न तिष्ठति तु यः पूर्वां नोपास्ते यश्च पश्चिमाम् ।
स शूद्रवद् बहिष्कार्यः सर्वस्मात् द्विजकर्मणः ॥ १०३ ।२
यथा काष्ठमयो हस्ती यथा चर्ममयो मृगः ।
तथा विप्रोऽनधीयानस्त्रयस्ते नाम बिभ्रति ॥
अव्रतानाममन्त्राणां जातिमात्रोपजीविनाम् ।
सहस्रशः समेतानां परिषत्त्वं न विद्यते ॥ अ० १२

कात्यायनीये एकादशखण्डेऽपि—

एतत्सन्ध्यात्रयं प्रोक्तं ब्राह्मण्यं यत्र तिष्ठति ।
यस्य नास्त्यादरस्तत्र न स ब्राह्मण उच्यते ॥

पाराशरस्मृतावष्टमाध्याये—

सावित्र्याश्चापि गायत्र्याः सन्ध्योपास्त्यग्निकार्ययोः ।
अज्ञानात् कृषिकर्तारो ब्राह्मणा नामधारकाः ।

शङ्खः—ब्राह्मणा ये विकर्मस्था वैडालव्रतिकास्तथा ॥
ऊनाङ्गा अतिरिक्ताङ्गा ब्राह्मणाः पङ्क्तिदूपकाः ॥ अ० २४
गुरूणां प्रतिकूलाश्च वेदाग्न्युत्सादिनश्च ये ।
गुरूणां त्यागिनश्चैव ब्राह्मणाः पङ्क्तिदूपकाः ॥
अनध्यायेष्वधीयाना शौचाचारबहिष्कृताः ।
शूद्रान्नरससम्पुष्टा ब्राह्मणाः पङ्क्तिदूपकाः ॥

शातातपः—अलाताशी अयाजी च विप्रकीर्णो भवेद् द्विजः ।
न तारयति दातारं नात्मानं सपरिग्रहम् ॥

वसिष्ठः—समार्घं धान्यमुत्सृज्य महार्घं यः प्रयच्छति ।
स वै वार्धुषिको नाम ब्रह्मवादिषु गर्हितः ॥
अश्रोत्रिया अननुवाक्या अनग्नयो वा
शूद्रधर्माणो भवन्ति । अ० ३ । १ ।
नास्तिकः पिशुनश्चैव कृतघ्नो दीर्घरोषकः ।
चत्वारः कर्मचण्डाला जन्मतश्चापि पञ्चमः ॥

वर्णधर्मप्रकरणे लघ्वाश्वलायनः—

यश्च कर्मपरित्यागी पराधीनस्तथैव च ।
अधीतोऽपि द्विजश्चैव स च शूद्रसमो भवेत् ॥

प्रथमप्रश्ने पञ्चमाध्याये बोधायनः—

गोरक्षकान् वाणिजकांस्तथा कारुकुशीलवान् ।
प्रेष्यान् वार्धुषिकांश्चैव विप्रान् शूद्रवदाचरेत् ॥

अष्टमाध्याये पराशरः—

ग्रामस्थानं यथा शून्यं यथा कूपस्तु निर्जलः ।

यथा हुतमनग्नौ च अमन्त्रो ब्राह्मणस्तथा ॥
गायत्रीरहितो विप्रः शूद्रादप्यशुचिर्भवेत् ।

इत्यादीनि वचनान्युपपद्यन्ते । एतैर्हि वचनैर्भ्रष्टाचाराणामपि विप्राणां न जातिपरिवर्तनेन वस्तुगत्या शूद्रत्वम् , किन्तु पङ्क्तिदूपकत्वादिकमित्येव गम्यते । शूद्रसमत्वं चात्र बोधितममन्त्रककर्माधिकारादिनाप्यनुसन्धेयम् । शूद्राणामपि हि यज्ञादावमन्त्रककर्माधिकारो वर्तत एव । व्यक्तं चैतत् स्मृतिकौमुद्याम् , शूद्रकमलाकरे च ॥

अत एव शान्तिपर्वणि ६९ तमाध्यायगतानि वचनान्युपपद्यन्ते । तानि यथा—

स्वाहाकारो वषट्कारो मन्त्रः शूद्रे न विद्यते ।
तस्माच्छूद्रः पाकयज्ञैर्यजेतान्नतवान् स्वयम् ॥
पूर्णपात्रमयीं चाऽऽहुः पाकयज्ञस्य दक्षिणाम् ।
शूद्रः पैजवनो नाम सहस्राणां शतं ददौ ॥
ऐन्द्राग्नेन विधानेन दक्षिणामिति नः श्रुतम् ।
यतो हि सर्ववर्णानां यज्ञस्तस्यैव भारत ! ॥
अग्रे सर्वेषु यज्ञेषु यतः श्रद्धा विधीयते ।
दैवतं हि महच्छ्रद्धा पवित्रं यजतां स्वयम् ॥
संसृष्टा ब्राह्मणैरेव त्रिषु वर्णेषु सृष्टयः ।
देवानामपि ये देवा यद् ब्रूयुस्तत्परं हितम् ॥
त्वं दैवतं ब्राह्मणः स्वेन नित्यं
परान् वर्णानयजच्चैवमासीत् ।
अवरो विनानस्त्वर्थतस्तत्र सृष्टो
न ब्राह्मणस्त्रिषु वर्णेषु राजन् ॥
तस्यापूर्णा ऋजवस्तानि वर्णाः
संसृज्यन्ते तस्य विकार एव ॥ इति ।

किञ्च तत्रैव ३४ तमाध्यायेऽपि—

मान्धाता—यवनाः किराता गान्धाराश्चीनाः शबरबर्बराः ।
गोऽजाविमहिषाणां च वडवानां च पोषकाः ॥
वृत्यर्थं प्रतिपद्यन्ते तान् वैश्यान् सम्प्रचक्षते ।
ऐश्वर्यकामा ये चापि सामिषा वापि भारत ! ॥
निग्रहानुग्रहरतांस्तान् द्विजान् क्षत्रियान्विदुः ।
अश्वारोहा गजारोहा रथिनोऽथ पदातयः ।
एते वैश्यसमा राजन् ब्राह्मणानां भवन्त्युत ॥
जन्मकर्मविहीना ये कदर्या ब्रह्मबन्धवः ।
एते शूद्रसमा राजन् ब्राह्मणानां भवन्त्युत ॥
अश्रोत्रियाः सर्व एते सर्वे चानाहिताग्नयः ।
तान् सर्वान् धार्मिकान् राजा बलिं विष्टिं च कारयेत् ॥
आह्वायका देवलका नाक्षत्रा ग्रामयाजकाः ।
एते ब्राह्मणचाण्डाला महापथिक* पञ्चमाः ॥
म्लेच्छदेशाश्च ये केचित् परैरप्युषिता नरैः ।
गत्वा तु ब्राह्मणस्तांस्तु चण्डालः प्रेत्य चेह च ॥
व्रात्यान् म्लेच्छांश्च शूद्रांश्च याजयित्वा द्विजातयः ।
अकीर्तिमिह सम्प्राप्य नरकं प्रतिपद्यते ॥
व्रात्ये म्लेच्छे तथा शूद्रे तस्करे पतितेऽशुचौ ।
कुदेशे च सुरापे च ब्रह्मघ्ने वृषलीपतौ ॥
अनधीतेषु सर्वत्र भुञ्जाने यत्र तत्र वा ।
पुत्रघातिनि शत्रौ च न मन्त्राद्याश्च ये द्विजाः ॥
शकास्तुषाराः कङ्काश्च पह्लवाश्चान्ध्रमद्रकाः ।
उण्ड्राः पुलिन्दा आरट्टाः काचा म्लेच्छाश्च सर्वशः ॥
ब्रह्मक्षत्रप्रसूताश्च वैश्याः शूद्राश्च मानवाः ।
कथं धर्मांश्चरिष्यन्ति सर्वे विषयवासिनः ॥

मद्विधैश्च कथं स्थाप्याः सर्वे वै दस्युजीविनः ।
एतदिच्छाम्यहं श्रोतुं मघवंस्तद् ब्रवीहि मे ।।

इन्द्रः—मातापित्रोर्हि शुश्रूषा कर्तव्या सर्वदस्युभिः ।
आचार्यगुरुशुश्रूषा तथैवाश्रमवासिनाम् ।।
भूमिपानां च शुश्रूषा कर्तव्या सर्वदस्युभिः ।
वेदधर्मक्रियाश्चैव तेषां धर्मो विधीयते ।।
पितृयज्ञास्तथा कूपा प्रपाश्च शयनानि च ।
दानानि च यथाकालं दातव्यानि द्विजातिषु ।।

इत्यादि वचनान्यपि व्याख्यातानि । एभिरमन्त्रकं तेषामपि पृथक् तत्तत्कर्माधिकारावगमात् । तथाच न सर्वात्मना ब्राह्मणादिभिः साम्यं विकर्मस्थानां शूद्रादीनां चेति सिद्धम् । अत एव शान्तिपर्वणि ६६ तमेऽध्याये—

युधिष्ठिरः—स्वकर्मण्यपरे युक्तास्तथैवान्ये विकर्मणि ।
तेषां विशेषमाचक्ष्व ब्राह्मणानां पितामह ! ।।

भीष्मः—विद्यालक्षणसम्पन्नाः सर्वत्राम्नायदर्शिनः ।
एते ब्रह्मसमा राजन् ब्राह्मणाः परिकीर्तिताः ।।
ऋत्विगाचारसम्पन्नाः स्वेषु कर्मस्ववस्थिताः ।
एते देवसमा राजन् ब्राह्मणानां भवन्त्युत ।।

इत्यादिना शूद्रादीनां मन्त्रायाज्यत्वमुपपाद्य—
*विकर्मस्थाश्च नोपेक्ष्या विप्रा राज्ञा कथञ्चन ।।*
नियम्याः संविभाज्याश्च धर्मानुग्रहकाम्यया ।।

इति पृथग्विभज्य संस्थापनमुपपद्यते । तथाच पूर्वापरविरोधपरिहारार्थं जातिब्राह्मण्यादिकं नियत मेवोरीकर्तव्यम् । अत एव—

मनुः—अविद्वांश्चैव विद्वांश्च ब्राह्मणो दैवतं महत् ।
प्रणीतश्चाप्रणीतश्च यथाग्निर्दैवतं महत् ॥
श्मशानेष्वपि तेजस्वी पावको नैव दुष्यति ।
हूयमानश्च यज्ञेषु भूय एवाभिवर्धते ॥
एवं यद्यनिष्टेषु वर्तन्ते सर्वकर्मसु ।
सर्वथा ब्राह्मणाः पूज्याः परमं दैवतं महत् ॥

पराशरः—दुःशीलोऽपि द्विजः श्रेष्ठो नतु शूद्रो जितेन्द्रियः ।
कः परित्यज्य गां दुष्टां दुहेच्छीलवतीं खरीम् ॥

इत्यादीनि वचनान्युपपद्यन्ते । यत्तु पूर्वमस्माभिः स्वधर्मनिष्ठस्यापि शूद्रस्य पतितब्राह्मणापेक्षयोत्कर्षः प्रतिपादितः, स पतितब्राह्मणस्यैव न तस्याभोज्यान्नत्वमित्यभिप्रायः एव । तदुक्तं विष्णुस्मृतौ—

"शूद्रोऽपि द्विविधो ज्ञेयः श्राद्धी चैवेतरस्तथा ।
श्राद्धी भोज्यस्तयोरुक्तो ह्यभोज्यस्त्वितरो मतः ॥
प्राणानर्थांस्तथा दारान् ब्राह्मणार्थे निवेदयेत् ।
स शूद्रजातिर्भोज्यः स्यात् अभोज्यः शेष उच्यते ॥" इति

सर्वथा तु नोक्तानां ब्राह्मणादीनां शूद्रत्वादिबोधकानां वचनानामनुसारेण न वर्णव्यवस्था निपतेतेति वक्तुं पार्यते ॥

मन्वादिस्मृतिषु हि चातुर्वर्ण्यं यथास्थितमङ्गीकृत्योपनयनकालादयो ये विहिताः, ते हि जातिब्राह्मण्यं विना न कथमप्युपपद्यन्ते ।

नत्वयं निष्कर्षः—

आनुशासनिके पर्वणि तृतीयाध्याये—

क्षत्रियो यदि वा वैश्यश् शूद्रो वा राजसत्तम ।
ब्राह्मण्यं प्राप्नुयात् केन तन्मे ब्रूहि पितामह ।
तपसा वा सुमहता कर्मणा वा श्रुतेन वा ।
ब्राह्मण्यमथ चेदिच्छेत्, कथं शक्यं पितामह ॥

मद्विधैश्च कथं स्थाप्याः सर्वे वै दस्युजीविनः ।
एतदिच्छाम्यहं श्रोतुं मघवंस्तद् ब्रवीहि मे ॥
इन्द्रः—मातापित्रोर्हि शुश्रूषा कर्तव्या सर्वदस्युभिः ।
आचार्यगुरुशुश्रूषा तथैवाश्रमवासिनाम् ॥
भूमिपानां च शुश्रूषा कर्तव्या सर्वदस्युभिः ।
वेदधर्मक्रियाश्चैव तेषां धर्मो विधीयते ॥
पितृयज्ञास्तथा कूपा प्रपाश्च शयनानि च ।
दानानि च यथाकालं दातव्यानि द्विजातिषु ॥

इत्यादि वचनान्यपि व्याख्यातानि । एभिरमन्त्रकं तेषामपि पृथक् तत्तत्कर्माधिकारावगमात् । तथाच न सर्वात्मना ब्राह्मणादिभिः साम्यं विकर्मस्थानां शूद्रादीनां चेति सिद्धम् । अत एव शान्तिपर्वणि ७६ तमेऽध्याये—

युधिष्ठिरः—स्वकर्मण्यपरे युक्तास्तथैवान्ये विकर्मणि ।
तेषां विशेषमाचक्ष्व ब्राह्मणानां पितामह ! ॥
भीष्मः—विद्यालक्षणसम्पन्नाः सर्वत्राम्नायदर्शिनः ।
एते ब्रह्मसमा राजन् ब्राह्मणाः परिकीर्तिताः ॥
ऋत्विगाचारसम्पन्नाः स्वेषु कर्मस्ववस्थिताः ।
एते देवसमा राजन् ब्राह्मणानां भवन्त्युत ॥
इत्यादिना शूद्रादीनां मन्त्रयाजकत्वमुपपाद्य—
विकर्मस्थाश्च नोपेक्ष्या विप्रा राज्ञा कथञ्चन ॥
नियम्याः संविभाज्याश्च धर्मानुग्रहकाम्यया ॥

इति पृथग्विभज्य संस्थापनमुपपद्यते । तथाच पूर्वापरविरोधपरिहारार्थं जातिब्राह्मण्यादिकं नियममेवाङ्गीकर्तव्यम् । अत एव—

मनुः—अविद्वांश्चैव विद्वांश्च ब्राह्मणो दैवतं महत् ।
प्रणीतश्चाप्रणीतश्च यथाग्निर्दैवतं महत् ॥
श्मशानेष्वपि तेजस्वी पावको नैव दुष्यति ।
हूयमानश्च यज्ञेषु भूय एवाभिवर्धते ॥
एवं यद्यनिष्टेषु वर्तन्ते सर्वकर्मसु ।
सर्वथा ब्राह्मणाः पूज्याः परमं दैवतं महत् ॥

पराशरः—दुःशीलोऽपि द्विजः श्रेष्ठो न तु शूद्रो जितेन्द्रियः ।
कः परित्यज्य गां दुष्टां दुहेच्छीलवतीं खरीम् ॥

इत्यादीनि वचनान्युपपद्यन्ते । यत्तु पूर्वमस्माभिः स्वधर्मनिष्ठस्यापि शूद्रस्य पतितब्राह्मणापेक्षयोत्कर्षः प्रतिपादितः, स पतितब्राह्मणस्येव न तस्याभोज्यान्नत्वमित्यभिप्रायः एव । तदुक्तं विष्णुस्मृतौ—

"शूद्रोऽपि द्विविधो ज्ञेयः श्राद्धी चैवेतरस्तथा ।
श्राद्धी भोज्यस्तयोरुक्तो ह्यभोज्यस्त्वितरो मतः ॥
प्राणानर्थांस्तथा दारान् ब्राह्मणार्थे निवेदयेत् ।
स शूद्रजातिर्भोज्यः स्यात् अभोज्यः शेष उच्यते ॥" इति

सर्वथा तु नोक्तानां ब्राह्मणादीनां शूद्रत्वादिबोधकानां वचनानामनुसारेण न वर्णव्यवस्था नियतेति वक्तुं पार्यते ॥

मन्वादिस्मृतिषु हि चातुर्वर्ण्यं यथास्थितमूरीकृत्योपनयनकालादयो ये विहिताः, ते हि जातिब्राह्मण्यं विना न कथमप्युपपद्यन्ते ।

तदयं निष्कर्षः—

आनुशासनिके पर्वणि तृतीयाध्याये—

क्षत्रियो यदि वा वैश्यश् शूद्रो वा राजसत्तम ।
ब्राह्मण्यं प्राप्नुयात् केन तन्मे ब्रूहि पितामह ।
तपसा वा सुमहता कर्मणा वा श्रुतेन वा ।
ब्राह्मण्यमथ चेदिच्छेत्, कथं शक्यं पितामह ॥

मद्विधैश्च कथं स्थाप्याः सर्वे वै दस्युजीविनः ।
एतदिच्छाम्यहं श्रोतुं मघवंस्तद् ब्रवीहि मे ॥
इन्द्रः—मातापित्रोर्हि शुश्रूषा कर्तव्या सर्वदस्युभिः ।
आचार्यगुरुशुश्रूषा तथैवाश्रमवासिनाम् ॥
भूमिपानां च शुश्रूषा कर्तव्या सर्वदस्युभिः ।
देशधर्मक्रियाश्चैव तेषां धर्मो विधीयते ॥
पितृयज्ञास्तथा कूपा प्रपाश्च शयनानि च ।
दानानि च यथाकालं दातव्यानि द्विजातिषु ॥

इत्यादि वचनान्यपि व्याख्यातानि। एभिरमन्त्रकं तेषामपि पृथक् तत्तत्कर्माधिकारावगमात्। तथाच न सर्वात्मना ब्राह्मणादिभिः साम्यं विकर्मस्थानां शूद्रादीनां वेति सिद्धम्। अत एव शान्तिपर्वणि ६६ तमेऽध्याये—

युधिष्ठिरः—स्वकर्मण्यपरे युक्तास्तथैवान्ये विकर्मणि ।
तेषां विशेषमाचक्ष्व ब्राह्मणानां पितामह ! ॥
भीष्मः—विद्यालक्षणसम्पन्नाः सर्वत्राम्नायदर्शिनः ।
एते ब्रह्मसमा राजन् ब्राह्मणाः परिकीर्तिताः ॥
ऋत्विगाचार्यसम्पन्नाः स्वेषु कर्मस्ववस्थिताः ।
एते देवसमा राजन् ब्राह्मणानां भवन्त्युत ॥
इत्यादिना शूद्रादीनां मध्यापाठयन्त्युपपाद्य—
विकर्मस्थाश्च नोपेक्ष्या विप्रा राज्ञा कथञ्चन ॥
नियम्याः संविभाज्याश्च धर्मानुग्रहकाम्यया ॥

इति पृथग्विभज्य संस्थापनमुपपादितं। तथाच पूर्वापरविरोधपरिहारार्थं जातिब्राह्मण्यादिकं नियत मेवोररीकर्तव्यम्। अत एव—

मनुः—अविद्वांश्चैव विद्वांश्च ब्राह्मणो दैवतं महत् ।
प्रणीतश्चाप्रणीतश्च यथाग्निर्दैवतं महत् ॥
श्मशानेष्वपि तेजस्वी पावको नैव दुष्यति ।
हूयमानश्च यज्ञेषु भूय एवाभिवर्धते ॥
एवं यद्यनिष्टेषु वर्तन्ते सर्वकर्मसु ।
सर्वथा ब्राह्मणाः पूज्याः परमं दैवतं महत् ॥

पराशरः—दुःशीलोऽपि द्विजः श्रेष्ठो नतु शूद्रो जितेन्द्रियः ।
कः परित्यज्य गां दुष्टां दुहेच्छीलवतीं खरीम् ॥

इत्यादीनि वचनान्युपपद्यन्ते । यत्तु पूर्वमस्माभिः स्वधर्मनिष्ठस्यापि शूद्रस्य पतितब्राह्मणापेक्षयोत्कर्षः प्रतिपादितः, स पतितब्राह्मणस्यैव न तस्याभोज्यान्नत्वमित्यभिप्रायः एव । तदुक्तं विष्णुस्मृतौ—

"शूद्रोऽपि द्विविधो ज्ञेयः श्राद्धी चैवेतरस्तथा ।
श्राद्धी भोज्यस्तयोरुक्तो ह्यभोज्यस्त्वितरो मतः ॥
प्राणानर्थांस्तथा दारान् ब्राह्मणार्थे निवेदयेत् ।
स शूद्रजातिर्भोज्यः स्यात् अभोज्यः शेष उच्यते ॥" इति

सवथा तु नोक्तानां ब्राह्मणादीनां शूद्रत्वादिबोधकानां वचनानामनुसारेण न वर्णव्यवस्था नियतेति वक्तुं पार्यते ॥

मन्वादिस्मृतिषु हि चातुर्वर्ण्यं यथास्थितमङ्गीकृत्योपनयनकालादयो ये विहिताः, ते हि जातिब्राह्मण्यं विना न कथमप्युपपद्यन्ते ।

तदयं निष्कर्षः—

आनुशासनिके पर्वणि तृतीयाध्याये—

क्षत्रियो यदि वा वैश्यश् शूद्रो वा राजसत्तम ।
ब्राह्मण्यं प्राप्नुयात् केन तन्मे ब्रूहि पितामह ।
तपसा वा सुमहता कर्मणा वा श्रुतेन वा ।
ब्राह्मण्यमथ चेदिच्छेत्, कथं शक्यं पितामह ॥

भीष्मः—ब्राह्मण्यमतिदुष्प्रापं वर्णैः क्षत्रादिभिस्त्रिभिः ।
परं हि सर्वभूतानां स्थानमेतद् युधिष्ठिर ॥
बह्वींस्तु संसरन् योनीर् जायमानः पुनःपुनः ।
पर्याये नाम कस्मिंश्चित् ब्राह्मणो नाम जायते ।

इति ब्राह्मण्यस्यैकस्मिन्नेव जन्मनि क्षत्रादिभाव्यत्वं निरस्तम् । तत्रैव त्रयोविंशत्यधिकशततमाध्याये—यथा—

भगवन् भगनेत्रघ्न कालसूदन शङ्कर ।
इमे वर्णाश्च चत्वारो विहिताः स्वस्वभावतः ।
उताहो क्रियया वर्णाः संभवन्ति महेश्वर ।
एवं मे संशयप्रश्नस्तमुच्छेत्तुं त्वमर्हसि ॥

श्रीमहेश्वरः—

स्वभावादेव विद्यन्ते चत्वारो ब्राह्मणादयः ।
एकजात्या सुदुष्प्राप्यमन्यवर्णत्वमागतम् ॥
तच्च कर्मविशेषेण पुनर्जन्मनि जायते ।
[illegible] प्रवक्ष्यामि तत्सर्वं कर्मपाककम् ॥
ब्राह्मणस्तु नरो भूत्वा स्वजातिमनुपालयन् ।
दृढं ब्राह्मणकर्माणि वेदोक्तानि समाचरेत् ॥
सत्यार्जवपरो भूत्वा दानयज्ञपरस्तथा ।
सत्यां जात्यां सुमुदितो जातिधर्मान् न हापयेत् ॥
एवं संवर्तमानस्तु कालधर्मं गतः पुनः ।
स्वर्गलोके हि जायेत स्वर्गभोगाय भामिनि ॥
तत्क्षये ब्राह्मणो भूत्वा तथैव नृषु जायते ।
एवं स्वकर्मणा मर्त्यः स्वजातिं लभते नरः ॥
अपरस्तु तथा कश्चित् ब्रह्मयोनिसमुद्भवः ।
अवमत्यैव तां जातिमज्ञानतमसाऽऽवृतः ॥

अन्यथा वर्तमानस्तु जातिकर्माणि वर्जयेत् ।
शूद्रवद्विचरेल्लोके शूद्रकर्माभिलाषवान् ॥
शूद्रैस्सह चरन् नित्यं शौचमङ्गलवर्जितः ।
स चापि कालधर्मस्थो यमलोके सुदण्डितः ॥
यदि जायेत मर्त्येषु शूद्र एवाभिजायते ।
शूद्र एव भवेद्देवि ब्राह्मणोऽपि स्वकर्मणा ॥
एवं जातिविपर्यासः प्रेत्यभावे भवेद् नृणाम् ।
अन्यथा तु न शक्यं तत् लोकसंस्थितिकारणात् ॥
तस्मात् जातिं विशिष्टां तु कथंञ्चित् प्राप्य मानवः ।
सर्वथा तां तथा रक्षेत् न पुनर्भ्रश्यते यथा ॥"

इति कर्मकृता जातिरिति वादो जन्मान्तरविषयः, नतु तस्मिन्नेव जन्मनीति प्रतिपादितम् ।

अर्जुनो हि युद्धार्थं क्षत्रियः सन् प्रवृत्तः, कारुण्यातिशयेन ब्राह्मणधर्मेण ततो विरतः भिक्षाचर्यादिकं ब्राह्मणधर्ममनुष्ठातुं प्रवर्तमानोऽपि—"धर्म्याद्धि युद्धात् श्रेयोऽन्यद् क्षत्रियस्य न विद्यते। " इति कारुण्यादिब्राह्मणधर्मदशायामपि क्षत्रियत्वेनैव भगवता मन्यते, नतु ब्राह्मणत्वेन । सति चैवं गुणकर्मकृता जातिरिति वादं जन्मान्तराधीनमेव भगवानपि मन्यते । युक्तं चैतत्—"वैषम्यनैर्घृण्ये न सापेक्षत्वात् तथाहि दर्शनम्" इति ब्रह्मसूत्रकारा धर्माधर्मापेक्षमेव भगवतो ब्राह्मणादिस्रष्टृत्वम् ; नतु स्वेच्छानुसारमिति प्रतिपादयति । तथाच भगवान् जन्मान्तरीयकर्माधीन-

एतेन—वज्रसूच्युपनिषदपि—व्याख्याता ; सापि हि "ब्रह्म-क्षत्रिय-वैश्य-शूद्रा इति चत्वारो वर्णाः। तेषां ब्राह्मणः प्रधानतमः" इति ब्राह्मणस्य प्राधान्यमुपक्षिप्य जन्मत एव न प्राधान्यम्, किन्तु ब्रह्मज्ञानत एवेति बोधयन्ती जन्मकृतां जातिव्यवस्थामादायैव प्रवर्तते, यतः—ब्राह्मणप्राधान्यप्रयोजकमेव ब्रह्मज्ञानं प्रतिपाद्यते, नतु ब्राह्मणवर्णत्वप्रयोजकम्।

अस्मिन् प्रसङ्गे—अनुशासनिकपर्वगतेन्द्रमतङ्गसंवाद आर्ष्टिषेणोपाख्यानादिकं चानुसन्धेयम्। आर्ष्टिषेणोपाख्याने हि—आर्ष्टिषेण-विश्वामित्रादीनां मन्त्रदर्शनाख्यमेव ब्राह्मणत्वम्, न जन्मकृतमिति स्पष्टं प्रतिपादितमिति विश्वामित्रादिदृष्टान्तोऽपि व्याख्यातः। एतेन स्वयंप्रतिभातवेदमन्त्रत्वाख्यमेव ब्राह्मण्यं ब्राह्मण्यां ब्राह्मणादजातानामपि वसिष्ठादीनामपीति सूच्यते, इति जन्मसिद्धैव ब्राह्मणजातिरित्यत्र न कोऽपि विरोधः।

सति चैवं ब्राह्मणः शूद्रो भवति शूद्रो ब्राह्मणो भवतीत्यादिवचनानि जन्मान्तरमभिप्रेत्यैव जातिविपर्यासं प्रतिपादयन्ति, नतु तत्तज्जन्मन्येवेत्यवचनसिद्धमिदम्।

एतेन—"जन्मना जायते शूद्रः संस्कारात् द्विज उच्यते।
विद्यया याति विप्रत्वं ब्रह्मविद् ब्राह्मणो भवेत्॥"

इत्यादिवचनानि—व्याख्यातानि।

इदमत्रावसरप्राप्तम्—यत् जातिविभागोऽनुलोमप्रतिलोमादिकृतोऽत्र संग्रहणीय इति, अनेन हि यथा ब्राह्मण्यां ब्राह्मणस्योत्पन्नस्य ब्राह्मणत्वम्, एवमन्त्यजायामन्त्यजस्योत्पन्नस्याप्यन्त्यजत्वमिति ज्ञातुं शक्येत।

अयं हि विभागोऽन्तरालादिजातिनाम्ना शास्त्रेषु व्यवह्रियते। सति चैवमन्त्यजानां बहुसंख्यानां कथमाविर्भाव इति शङ्कापि—परिहृतप्राया भविष्यति। संकरजातयस्तद्यान्तरविभागादय प्रथ-

ममागमाद्यनुसारेण संगृह्यन्ते, एतेषामेव स्मृत्यादिष्वपि समुल्लेख इति तावतैव चरितार्थता स्यात्। आगमप्रमाणान्यवलम्ब्य जातिविभागसंकलनेन हि तत्तज्जातीनामागममात्रगम्ये देवालयप्रवेशे स्थाननियमादिकमपि ज्ञातं स्यात्, तत्रत्या व्यवस्था च सम्यग् ज्ञाता स्यादिति।

तत्रेमे श्रीवैखानसगृह्यसूत्रे दशमप्रश्न एकादश-द्वादश-चतुर्दश-पञ्चदशखण्डाः संगृह्यन्ते :—

"चातुर्वर्ण्यस्य संकरेणोत्पन्नानामनुलोम-प्रतिलोमान्तराल-व्रात्यानामुत्पत्तिर्नाम वृत्तिश्च। ऊर्ध्वजातानामधोजातायां जातोऽनुलोमः, अधरोत्पन्नादूर्ध्वजातायां जातः प्रतिलोमः। ततोऽनुलोमादनुलोम्यां जातोऽन्तरालः, प्रतिलोमात्प्रतिलोम्यां जातो व्रात्यो भवति। ब्रह्मणो मुखादुद्भूता ब्राह्मणाः, ब्राह्मण्यश्च, ब्रह्मर्षेः पत्न्यो बभूवुः। तेषां गोत्रोत्पन्नाद् ब्राह्मणाद् ब्राह्मण्यां समानगोत्रायां विधिना समन्त्रकं गृहीतायां जातो ब्राह्मणः शुद्धो भवेत्। विधिहीनमन्यपूर्वायां मृतभर्तृकायां गोलकः, जीवद्भर्तृकायां कुण्डश्च विप्रः, द्वौ निन्दितौ स्याताम्। तस्माद्यो बाहुभ्यामुत्पन्नात् क्षत्रियात् क्षत्रियायां विधिवद् जातः क्षत्रियः शुद्धः, तयोरविधिकं गढोत्पन्नोऽशुद्धो भोजाख्यो नैवाभिषेच्यः, पट्टबद्धो राज्ञः सैनापत्यं करोति। शुद्धाभावे पट्टबद्धोऽन्यान् पायात्। तद्वृत्तं राजवत् स्यात्, अधस्तादूरुभ्यामुत्पन्नाद्वैश्याद्वैश्यायां तथा शुद्धः, विधिवर्जे मणिकारोऽशुद्धो मणि-मुक्तादिभेद-शङ्ख-वलयकारो स्यात्। अथ पद्भ्यामुत्पन्नाच्छूद्राच्छूद्रायां न्यायेन शूद्रः शुद्धः, जाराद् मालवको निन्दितः शूद्रोऽश्वपालकोऽश्वतृणहारी चेत्येते चातुर्वर्णिकाः।

तेषामेव सङ्करेणोत्पन्नास्सर्वेऽनुलोमाख्याः। ब्राह्मणात् क्षत्रियकन्यायां जातो मातृसवर्णोऽनुलोमेषु मुख्यः, अस्य वृत्तिराथर्वणं कर्म, अश्व-हस्ति-रथ-संवाहनमारोहणं राज्ञः सैनापत्यं चायु-

वैद्यकृत्यं वा। शूद्रोत्पन्नोऽभिषिक्ताख्योऽभिषिक्तश्चेद् नृपो भूयात्, अष्टाङ्गमायुर्वेदं भूततन्त्रं वा संपठेत्। तदुक्ताचारो दयायुक्तः सत्यवादी तद्विधाने सर्वप्राणिहितं कुर्यात्, ज्योतिर्गणनादिकाधिकवृत्तिर्वा। विप्राद्वैश्यायामम्बष्ठः कथाजीव्याग्नेयनर्तको ध्वजविश्रावकः शल्यचिकित्सी वा, जारात् कुम्भकारः कुलालवृत्तिर्नापितो नाभेरूर्ध्ववप्ता च। क्षत्रियाद्वैश्यायां मद्गुः श्रेष्ठित्वं प्राप्तो महानमोल्यश्च वैश्यवृत्तिः क्षात्रं कर्म नाचरति, गूढादाश्विकोऽश्वक्रयविक्रयी स्यात्।......विप्राच्छूद्रायां पारशवो भद्रकालीपूजन-चित्रकर्माङ्गविद्यातूर्यघोषण-मर्दनवृत्तिः, जारोत्पन्नो निषादो व्यालादिमृगहिंसाकारी। राजन्यतः शूद्रायामुग्रस्तुदण्डव्यदण्डनकृत्यः, जारात् शूलिकः शूलारोहणादिपातनाकृत्यः। वैश्यतः शूद्रायां चूचुकः क्रमुक-ताम्बूल-शाक-काष्ठादिक्रयविक्रयी, गूढात् कटकारः, कटकारी चेति। ततोऽनुलोमादनुलोमायां जातश्चानुलोमः पितुर्मातुश्च वा जातिवृत्तिं भजेत्।

क्षत्रियाद् विप्रकन्यायां मन्त्रवद् जातः सूतः, प्रतिलोमेषु मुख्योऽयम्। मन्त्रहीनोपनीतो द्विजधर्महीनः। अस्य वृत्तिर्धर्मानुबोधनं राज्ञः, अश्वसंस्कारश्च। जारेण मन्त्रहीनजो रथकारो द्विजत्वहीनः शूद्रकृत्योऽश्वानां पोषण-दमनादिपरिचर्याजीवी। वैश्याद् ब्राह्मण्यां मागधः शूद्रैरप्यभोज्यान्नोऽस्पृश्यः सर्ववन्दीप्रशंसा-कीर्तन-गान-प्रेषणवृत्तिः, गूढाच्चमी उपवर्णाधमेता स्यात्, वैश्यात् क्षत्रियायामयोगवस्तन्तुवायः पटकर्मा धनकांस्योपजीवी, गूढात् धारात् पुलिन्दोऽरण्यवृत्तिर्दुष्टमृगसत्त्वघाती। शूद्रात् क्षत्रियायां पुल्कसः, कृतकां वार्क्षीं वा सुरां कृत्वा पाचको विक्रीणाति, चौरवृत्ताद् जाराद्वा ईल्वः। शूद्राद्वैश्यायां वैदेहकः शूद्रास्पृश्यः शूद्रैरप्यभोज्यान्नो वन्यवृत्तिरज महिष-गोपालः, तक्रसानां विक्रयी, चौर्यात् चक्रिको लवण-तैल-पिण्याकजीवी। शूद्राद् ब्राह्मण्यां चण्डालः

सीस-कालायसाभरणो वध्रावद्धकण्ठकक्ष्यो झल्लरीयुक्तो यतस्ततः संचरन् सर्वकर्मबहिष्कृतः पूर्वाह्ने ग्रामादौ वीथ्यामन्यत्रापि मलान्यपकृष्य बहिरपोहयति । ग्रामाद् बहुदूरे स्वजातीयैर्निवसेत् । मध्याह्नात्परं ग्रामे न विशति, अयं प्रविशेच्चेद् राज्ञा वध्यः, अन्यथा भ्रूणहत्यामवाप्नोति ।

अन्तराला व्रात्याश्च—चूचुकाद्विप्रायां तक्षकोऽस्पृश्यो झल्लरीहस्तो दारुकारः सुवर्णकारोऽयस्कारः कांस्यकारो वा । क्षत्रियायां मत्स्यबन्धी, वैश्यायां सामुद्री समुद्रपण्यजीवी च मत्स्यघाती च स्यात् । अम्बष्ठाद् विप्रायां नाविकः समुद्रपण्यमत्स्यजीवी समुद्रलङ्घनाद् नावमाप्लावयति, क्षत्रियायां मयो नाभेरधो रोमवसा, मद्गोर्विप्रायां वेणुको वेणु-वीणावादी, क्षत्रियायां कर्मकारः कर्मारकारी, नृपायां सूचिकः सूचीवेधनकृत्यवान् । अयोगवाद् विप्रायां ताम्रस्ताम्रजीवी, नृपायां जातः खनकः खननजीवी । खनकाद् नृपायाम् उदबन्धः शूद्रैरप्यस्पृश्यो वस्त्रनिर्णेजनकः । पुल्कसाद्विप्रायां रजको वस्त्राणां रजोनिर्णेजनकः । चण्डालाद्विप्रायां श्वपचश्चण्डालचिह्नयुक्तो निन्द्यः सर्वकर्मबहिष्कार्यो नगरादौ मलानामपोहकः श्मशाने वसन् हेयपात्रग्राही प्रेतबन्धनं विसृजेत्, वध्यान् हत्वा तद्वस्त्रादीन् गृह्णीयात्, पराधीनाहारो भिन्नपात्रभोजी श्वमांसभक्षी"—इति ।

जातितत्त्वमिदं शैवाद्यागमग्रन्थेषु देवालयसंरक्षणप्रकारनिरूपणपरेषु अस्या अस्या जातेः इयदवधि प्रवेशाधिकार इति व्यवस्थापनार्थमेव प्रतिपाद्यते, इति प्रथममस्मिन् विषये कामिकागमवचनानि संगृह्यन्ते । तानि यथा—

सर्वासां चैव जातीनामादिशैवो वरिष्ठकः ।
सर्वेषां चैव जगतां गुरुरित्यभिधीयते ॥

तस्माद् लोकगुरुश्चेति आदिशैवस्य कीर्तितम् ।
शिवद्विजकराद् भस्म न गृहीतं कदाचन ॥
ग्राहयेद् यदि मोहेन, स्यात्तु स्त्री-पुत्रनाशनम् ।
यदि योगी तपस्वी च संन्यासी च तथैव च ॥
स्वकरेण गृहीतं चेत् राज-राष्ट्रविनाशनम् ।
तद्दोषशमनार्थाय स्नपनं शान्तिहोमकम् ॥
आचार्यादि समारभ्य परिचारसमावधि ।
गर्भगेहः प्रवेशार्हः किञ्चिद् भेदः प्रकीर्तितः ॥
आचार्यस्यार्चकस्यैव लिङ्गस्पर्शनयोग्यता ।
स्थानिकः पाचकश्चैव परिचारत्रयं तथा ॥
न स्पृशेद् लिङ्गकं चैव स्पृशेद् दुर्भिक्षसंभवः ।
तद्दोषशमनार्थाय जलसंप्रोक्षणं कुरु ॥
दीक्षायुक्तो महाशैवो वेदागमविशारदः ।
सोऽर्धमण्डपके तिष्ठन् महादेवं प्रदर्शयेत ॥
गर्भगेहप्रवेशश्चेद् ग्रामनाशो भविष्यति ।
तद्दोषशमनार्थाय कुर्याद् राज्याभिषेचनम् ॥
लिङ्गस्पर्शनकं कृत्वा राजा दुःखमवाप्नुयात् ।
तद्दोषशमनार्थाय जलसंप्रोक्षणं कुरु ॥
केवलं परिचारश्च महाशैवः स्थितस्तु चेत् ।
गर्भगेहस्य पार्श्वे तु स्थित्वा कार्याणि कारयेत् ॥
गर्भावरणकान्ते च मण्टपं पञ्चधा भवेत् ।
सार्धमण्टपकं चैव महामण्टपमेव च ॥
स्नपनमण्टपं चैव नृत्तमण्टपमेव च ।
धूपमण्डपकं चैव पञ्चधा परिकीर्तितम् ॥
गर्भगेहस्य पार्श्वे तु सान्तरालं तु मण्टपम् ।
स्तम्भद्वयसमायुक्तमथवा स्तम्भहीनकम् ॥

सार्धमण्टपकम्, पश्चाद् महामण्टपकं परम् ।
स्नपनं च ततः प्रोक्तं तद्बाह्ये सुखमण्टपम् ॥
चतुस्तम्भसमायुक्तमथवा स्तम्भहीनकम् ।
सार्धमण्टपकं कल्प्यं महामण्टपकेऽपि च ॥
रसस्तम्भसमायुक्तं स्नपने च ततः शृणु ।
वसुस्तम्भसमायुक्तं नृत्ते च रविसंख्यकम् ॥
अथवा विंशतिस्तम्भात् छूपे च षोडशं भवेत् ।
द्वात्रिंशदथ कल्प्यं च गर्भावरणके तथा ॥
गर्भगेहं शिरःस्थानं सार्धे चापि ललाटकम् ।
महामण्टपं चैव नेत्रवत् परिकीर्तितम् ॥
स्नपनं नासिकाकारं नृत्तमास्यं प्रकीर्तितम् ॥
छूपं कण्ठपदेशं च स्थानपञ्चकसंयुतम् ।
मण्टपादीनि सर्वाणि गर्भस्यावरणानि च ॥
गर्भस्योच्च न कर्तव्यं कृतं चेद् राष्ट्रनाशनम् ।
तद्दोषशमनार्थाय पुनर्बालालयं चरेत् ॥
उत्सवमण्टपं कल्प्यं कुर्यात् कुम्भाभिषेचनम् ।
जीर्णोद्धृतिं च काले तु मण्टपं पूर्ववत् कुरु ॥
महाव्रताः पाशुपताः शाक्ताश्च शांभवास्तथा ।
ब्राह्मणानां च सर्वेषामर्धमण्टपसेवितम् ॥
वेदाध्ययनविप्राणां स्नपने च प्रदर्शयेत् ।
महाव्रतश्च सार्धे चेत् प्रविशेद् रोगसंभवः ॥
तद्दोषशमनार्थाय कुर्याद् गव्याभिषेचनम् ।
गर्भगेहे प्रवेशश्चेद् जलसंप्रोक्षणं कुरु ॥
लिङ्गं चापि स्पृशेच्चैव परराष्ट्रभयं भवेत् ।
तद्दोषशमनार्थाय महाकुम्भाभिषेचनम् ।
वेदाध्ययनविप्रांश्च महामण्टपके तथा ॥

प्रविशेद् राष्ट्रनाशश्च तद्दोषशमनार्थकम् ।
पञ्चगव्याभिषेकश्च तदन्ते च प्रवेशनम् ॥
जलसंप्रोक्षणं कृत्वा गर्भे चैव प्रवेशितम् ।
मोहेनापि प्रवेशश्चेद् महाकुम्भाभिषेचनम् ॥
यतिर्योगी तपस्वी च नृत्तमण्टपसेवितम् ।
स्नपने च प्रवेशश्चेद् दुर्भिक्षं भवति ध्रुवम् ॥
तद्दोषशमनार्थाय कुर्याद् गव्याभिषेचनम् ।
महामण्टपकं चैव प्रविशेद् रोगपीडितम् ॥
तद्दोषशमनार्थाय जलसंप्रोक्षणं कुरु ।
तदन्ते च प्रवेशस्तु महाकुम्भाभिषेचनम् ॥
यूपाग्रे क्षत्रियश्चैव वैश्यश्चापि तथा भवेत् ।
नृत्ते चाप्यनुलोमश्च गन्तुं चेद् वर्षनाशनम् ॥
तद्दोषशमनार्थाय पुण्याहेन विशुद्ध्यति ।
स्यात् ॥
शमनार्थाय कुर्यात् कुम्भाभिषेचनम् ।
तदन्ते च प्रवेशश्चेद् जलसंप्रोक्षणं कुरु ॥
तस्यान्ते च प्रवेशश्चेद् महाकुम्भाभिषेचनम् ।
सच्छूद्रो यूपपृष्ठे च स्थित्वा दर्शनमाचरेत् ॥
यूपाग्रे [redacted] प्रवेशश्चेत् पुण्याहेन विशुद्ध्यति ।
तस्यान्ते च प्रवेशश्चेत् पञ्चगव्येन शुद्धिदम् ॥
तदन्ते च प्रवेशश्चेद् राज-राष्ट्रविनाशनम् ।
तद्दोषशमनार्थाय जलसंप्रोक्षणं कुरु ॥
तस्यान्ते च प्रवेशश्चेद् महाकुम्भाभिषेचनम् ।
यूपमण्डपहीनं चेत् क्षत्रियाश्च विशस्तथा ॥
सच्छूद्रो नृत्तके स्थित्वा तत्तद्वर्णानुसारतः ।
नृत्तं चापि विहीनं चेद् यति-योगि-तपस्विनाम् ॥

श्रीवैखानसे भगवद्धर्मशास्त्रे महर्षिमरीचिप्रणीते विमानार्चनकल्पे प्रायश्चित्तप्रकरणेऽस्पृश्यानां मन्दिरप्रवेशनं प्रायश्चित्तनिमित्तमिति व्यवस्थापितम्। तद्यथा—

"अथास्पृश्यस्पर्शने प्रायश्चित्तं वक्ष्ये। मूषक-सर्प-कृकलास-मण्डूक-मार्जार-नकुलादिषु गर्भागारं प्रविष्टेषु विण्मूत्रविसर्जने च तद् व्यपोह्य पञ्चगव्यैरापोहिष्ठादिना प्रोक्षयेत्, तेषु ध्रुवमारूढेषु विण्मूत्रविसर्जने च क्षिप्रं वस्त्रेण शोधयित्वा शुद्ध्यर्थं कुशेन मार्जयित्वा कुशोदकेन "आपो-हिरण्य-पवमानैः" प्रोक्षयार्चयेत्।

सूतिकोदक्या-रजक-ध्वजाद्यन्त्यजातिभिः प्रथमावरणे प्रविष्टे परिषद्देवतानामर्चास्थाने स्पृष्टे प्रविष्टे च दर्भोल्कनोद्दीप्य वास्तुलपनोक्तमन्त्रैः पञ्चगव्यप्रोक्षणं पुण्याहं च कुर्यात्। नित्याग्नौ दौवारिकमन्त्रं द्वारपालकमन्त्रं वैष्णवं च जुहुयात्। बाह्यावरणस्य संमार्जनोपलेपन-प्रोक्षणैः शुद्धिर्भवति। तेष्वर्चनाकाले वा दृष्टेषु देवं पञ्चगव्येनाभिषिच्य शुद्धोदकैः संस्नाप्य प्रोक्षणैः प्रोक्ष्य पूर्ववद् हुत्वाऽर्चयेत्।

आलयाभ्यन्तरे प्रविष्टे तत्स्पृष्टद्रव्यनिर्वेदने च द्रव्यं यथाविधि शोधयित्वा वास्तुहोमं हुत्वा पर्यग्नि-पञ्चगव्याभ्यां शोधयित्वा पुण्याहं कृत्वा देवं कलशैः संस्नाप्य नित्याग्नौ वैष्णवं विष्णुसूक्तं रौद्रं सौम्यं ब्राह्मं श्रीसूक्तं भौमसूक्तं च हुत्वा ब्राह्मणान् भोजयेत्। ध्रुव-बेर-कौतुकादिषु स्पृष्टेषु पूर्ववत् शुद्धिं कृत्वा वास्तुहोमं हुत्वा पर्यग्नि-पञ्चगव्याभ्यां शोधयित्वा पुण्याहं कृत्वा देवं कलशैः संस्नाप्याऽऽज्याग्नौ महाशान्तिं कृत्वा पुनः प्रतिष्ठां कारयेत्। शूद्राद्यनुलोमस्पृष्टद्रव्यनिर्वेदने देवं पञ्चगव्यैः शुद्धोदकैश्चाभिषिच्य पुण्याहं वाचयेत्।

पञ्चपातकैश्चण्डालाद्यैश्चालये प्रविष्टे तत्स्पृष्टद्रव्यनिर्वेदने च सप्ताहं महाशान्तिं हुत्वाऽऽलयमभ्युक्ष्य पुनः प्रतिष्ठां कारयेत्। ध्रुव-

बेर-कौतुकादिषु स्पृष्टेषु पूर्ववत्-शुद्धिं कृत्वा ससाहं महाशान्ति हुत्वा वित्तानुसारेण कलशैः संस्नाप्य पुनः प्रतिष्ठां कारयेत्। पतिते गर्भगृहे प्रविष्टे वास्तुशुद्धिं कृत्वा महाशान्ति हुत्वाऽर्चयेत्॥ एतेषु प्रथमावरणे द्वितीयावरणे वा नैरन्तर्येण संचरत्सु मासेऽतीते मासमेकं महाशान्ति हुत्वा कर्षणादि पुनःसंस्कारं कृत्वा महा-प्रतिष्ठां कारयेत्। तेषु प्रासादाभ्यन्तरे पार्श्वे च संचरत्सु संवत्सरेऽतीतेऽर्चनादि संत्यज्य कौतुकादिरक्षणं कृत्वा गर्भागारादिससमा-कारेषु वा वासयित्वा मासेऽतीते शुद्धिं कारयित्वा मासत्रयं महा-शान्ति हुत्वा कर्षणादि पुनःसंस्कारं कृत्वा बालालयं संकल्प्य जलाधिवासादीनि कारयित्वा बिम्बशुद्धिं कृत्वाऽशीत्यधिकसहस्र-कलशैः संस्नाप्य ब्राह्मणान् भोजयित्वा वैष्णवान् संपूज्य देवं बाला-लये प्रतिष्ठाप्यालयादिषु सर्वत्र नवीकरणं कृत्वा महाप्रतिष्ठां कार-येत्। तैस्संसर्गिणा स्पर्शे सूतिकादीनामुक्तं प्रायश्चित्तं कारयेत्, तत्संसर्गिणां स्पर्शे स्नपनादिना शुद्ध्यति। तत्संसर्गिणां दोषो नास्ति। अशौचिद्विजस्पृष्टहविर्निवेदने चैकाहं महाशान्ति हुत्वा शुद्धोदकैरभिषिच्य पुण्याहं वाचयित्वा पूर्ववदर्चयेत्। ध्रुव-बेर-कौतुकादिषु संस्पृष्टेषु पूर्ववन्महाशान्ति हुत्वा पुनः स्नापनं कारयेत्। आलयाद् बाह्ये सर्वत्र प्रविष्टे गौरवं लाघवं च ज्ञात्वा समुचैव कारयेत्। खद्योत-पक्षिजातिप्रवेशे बिम्बे स्पृष्टे पूर्ववत् पर्यग्नि-गव्याभ्यां शोधयित्वा देवं शुद्धोदकैरभिषिच्य प्रोक्षणैः प्रोक्ष्य नित्याग्नौ पुत्यां वा वैष्णवं जुहुयात्। तत्समीपस्थान् बिम्बादीन् पूर्ववत् संशोध्य शुद्धोदकैः संस्नाप्य पुण्याहं वाचयित्वा पूर्ववत् होमं जुहुयात्। पूर्वोक्तदेशेषु मनुष्याणां श्व-कुक्कुटादीनां च छेदने ताडने रुधिरस्रावे मृतादौ संभूते तद् व्यपोह्य तद्देशशुद्धिं कृत्वा वास्तुहोमं हुत्वा देवं ससभिः कलशैः संस्नाप्य तद्दोषशमनार्थं महा-शान्ति हुत्वा पूर्ववदभ्यर्च्य प्रतिष्ठां कारयेत्, हविर्निवेदयेदि"ति।

तत्रैव बालालयविधिप्रसङ्गेऽपि "चण्डालाद्यस्पृश्यस्पृष्टे प्रविष्टे वाऽचिरेण देवं बालालये प्रतिष्ठापयेत्" इत्यस्पृश्यप्रवेशो बालालयनिमित्तमिति प्रतिपादितम्। बालालयेऽर्च्यमानेऽपि स्थान-संकटे चण्डालाद्यशुच्यधिष्ठिते नद्यादिभिः स्थाननाशे वा सति पुनर्बालालयान्तरविधानमप्यत्रानुसन्धेयम्।

अद्भुतशान्तिप्रकरणे—"अद्भुतेषु दृष्टेषु सद्यः शान्तिं कुर्यात्, अन्यथा कर्त्रारायकयोर्ग्रामस्य च महद्भयं राज्ञो राष्ट्रस्य क्षोभश्च जायते। तस्मात् सर्वप्रयत्नेन शान्तिमारभेत" इत्युपक्रम्य—अद्भुतानां त्रैविध्यं दिव्यान्तरिक्षभौमभेदेन संगृह्य, भौमानां चर-स्थिर-भावादनेकत्वं निरूप्य, स्थिरेषु प्रतिमारोदन-हसन-जल्पन-परिवर्तन-स्वेद-रुधिरस्राव-ज्वलनादिमध्ये प्रतिलोमपतित-पाषण्डान्त्यजाति-शृगालादिवर्गास्पृश्यस्पर्शन-प्रवेशनादिकमपि ग्राम-राज-राज्यादिवि-पत्तिनिदानमद्भुतानीति प्रतिपादितम्।

अयमत्रानुसन्धेयो विशेषः—यत् पूर्वोक्तानामद्भुतानां स्थान-विशेषसम्बन्धेन भीतिविशेषहेतुत्वम्। तद्यथा—तेषु बेर-पीठ गर्भ-गृहभवानि राजराष्ट्रविनाशकारणानि, विशेषेण कर्त्रारायकयोश्च। प्रासादोत्पन्नानि क्षत्रियस्य, प्रथमावरणे वैश्यजातीनां मन्त्रिपुरो-हितस्य माण्डलिकानां च भयावहम्, प्राणपीडादिभयप्रदं च। आस्थानमण्डप-सभामण्डप- राजवेश्म- ब्राह्मण-क्रीडास्थान- महानसा-चार्य-यजमानादिसर्वेतरवर्ण वैश्य-चैत्यवृक्षादिषु संभूतानां फलानि विभागेन विज्ञेयानि॥ तत्र भौमेषु देव-वैरायार्यपीठ-गर्भगृहाभ्यन्त-रेषूत्पन्नेषूत्पन्ना दोषा उत्तमोत्तमाः, प्रथमावरणे मध्यमाः, शेषेष्व-धमाः, इत्यस्पृश्यस्पर्शनप्रवेशनादीनां यद्यपि प्रथमावरणे मध्यमदोष-त्वमेव; तथाप्यस्पृश्यप्रवेशने शुद्धिं कृत्वा शान्तिं समाचरेदिति प्रायश्चित्तीयत्वं व्यवस्थापितमेव॥

प्रतिष्ठाप्रायश्चित्तप्रकरणेऽपि—अस्पृश्यस्पृष्टे बिम्बे स्नपनोक्तप्रकारेण स्नपनं कृत्वा पूर्ववत् प्रायश्चित्तं कुर्यात् इति प्रतिष्ठातः पूर्वं तक्षादिस्पर्शनादिप्रायश्चित्तं प्रतिपादितम्। इदं तु मन्दिरबाह्यबिम्बविषयमिति मन्तव्यम्।

पूजाकाले—"वेददूषक-पाषण्ड-पापरोगान्वितानां प्रतिलोमान्त्यजातीनां च दर्शने ब्राह्मं वैष्णवं रौद्रमाग्नेयं च हुत्वाऽर्चयेत्" इत्यस्पृश्यदर्शनमपि प्रायश्चित्तनिमित्तमिति प्रतिपादितम्।

अर्चनानवनीतेऽपि सेवाप्रकरण इदं विवेचितमेव—यद् अस्पृश्यानां देवालयप्रवेशनं न योग्यम्, यतस्तेषां गोपुरदर्शनमेव वैधमिति। तदुक्तम्—

गर्भागारे च सेवार्थं वैखानसकुलोद्भवः।
स्वाध्यायमात्रविप्राणामर्धमण्टपसेवितम्॥
तपस्विनां यतीनां च महामण्टपसेवितम्।
राजराजकुलस्त्रीणां नृत्यमण्टपसेवितम्॥
वैश्यशूद्रानुलोमादेर्ब्राह्यमण्टपसेवितम्।
अन्येषां विष्णुभक्तानां गोपुरं तु विधीयते॥
"प्रतिलोमान्त्यजातीनां स्थूपिं दृष्ट्वा समाचरेत्।"
"अर्चकः सन्निधौ तिष्ठेत् परिचारोऽर्धमण्टपे॥
अन्येषां मण्टपे चैव अनुलोमास्तु दूरतः।
दैविके गर्भगेहेऽन्यद्विजस्यापि प्रवेशने॥
भूम्राण्डानि परित्यज्य पुनः पुण्याहमाचरेत्।"
गर्भालये प्रविष्टे तु सूत्रान्तरद्विजातिभिः॥
अष्टोत्तरशतैश्चैव कलशैरभिषेचयेत्।
प्रमादात् स्पर्शने चैव संप्रोक्षणमथाचरेत्॥
अज्ञानाद्दर्शने चैव प्रतिष्ठां पुनराचरेत्।
आस्थानमण्टपादौ तु यदा संपूज्यते हरिः॥

चतुर्वर्णा यथेष्टं तु सेवन्ते च महोत्सवे ।
प्रभुर्भक्तपराधीनो नित्यमाराधयेद्धरिम् ।
विमानमथवा तस्य पुरं गोपुरमेव वा ॥ इति ।

देवालयसमीपस्थान् देवसेवार्थमागतान् । चण्डालान् पतितान् वापि स्पृष्ट्वा न स्नानमाचरेत् ।" "विष्ण्वालयसमीपस्थान् विष्णुसेवार्थमागतान् । चण्डालान् पतितान् वापि स्पृष्ट्वा न स्नानमाचरेत् ।" इति वचने तूत्सवकालमात्रे गर्भगृहादौ पिहिते देवालयसमीपस्थानामेवास्पृश्यतां निषेधतः । "उत्सवे वासुदेवस्य यः स्नाति स्पर्शशङ्कया । स्वर्गस्थाः पितरस्तस्य पतन्ति नरकेऽशुचौ" । इति भृगुवचनैकवाक्यता नान्यथोपपद्यते । उत्सवप्रकरणगते हीमे वचने । "उत्सवे देवेशं सेवन्ते, ते सर्वे पदे पदे यज्ञफलं लभेरन्" इति सर्वसाधारण्येनोत्सवे कौतुकदर्शनाधिकारं भृग्वादयो मन्यन्ते । तस्मात् अस्पृश्यस्पर्शनं न दोषाय भवेत्" इति विमानार्चनकल्पगतं प्रमाणमप्यत एव व्याख्यातम् ।

"शूद्रानुलोमानीतानि अपक्वानि निवेदयेत्, प्रतिलोमानीतानि तानि सर्वाणि वर्जयेत्" इत्युत्सवावसरे देवसेवार्थमागतानां प्रतिलोमानां स्पर्शेन फलादीनामपि निवेदनायोग्यत्वं विमानार्चनकल्पे प्रतिपाद्यते ।

अयमेवार्थः पाञ्चरात्रागमानुसारिपाद्मतन्त्रेऽपि प्रतिपाद्यते–

रोदनं हसनं जल्पो ज्वलनं परिवर्तनम् ।
स्वेदश्च रुधिरस्रावः क्रिमि-कीटादिसंभवः ॥
प्रतिमायां भवेच्चेत्तु रक्तस्त्रीदर्शनं तथा ।
पाषण्ड-प्रतिलोमान्त्यजातिभिः पतितैस्तथा ॥
शृगालादिभिरस्पृश्यैः स्पर्शने च प्रवेशने ।
प्रवर्तने चोपसर्पे पर्ण-पुष्प-फलेषु च ॥

शाखादौ विपरीतत्य दर्शनं च विशेषतः ।
रक्तस्रावो जलस्रावश्चाङ्कुलानि स्थिरेषु तु ॥
तेषु गर्भगृहे चैव पीठे चैव भवानि तु ।
राज्ञो राष्ट्रस्य विप्राणां नाशकानि विशेषतः ॥
कर्त्राराधकयोर्नाश इति शातातपोऽब्रवीत् ।
प्रासादनानि राज्ञां स्युः प्रासादेऽपि विशेषतः ॥
अधिष्ठाने च पादे च प्रस्तरे च गलेऽपि च ।
शिखरे च भयानि स्युः क्षत्रियाणां क्रमेण तु ॥
अभिषेकस्य योग्यस्य युवराजस्य चैव हि ।
अभिषिक्तस्य सम्राजश्चात्याहितकराणि तु ॥
प्रथमावरणे वैश्यजातीनां मन्त्रिणां तथा ।
पुरोहितस्य तन्मण्डलाधिपानां महद्भयम् ॥
शूद्रजातिविपद्धेतुः द्वितीयावरणादिषु ।
सस्यनाशो गजाश्वादिपशुनाशश्च जायते ॥
पुरोयसश्चाग्निकुण्डे ब्रह्मस्थाने द्विजन्मनाम् ।
रुद्रालये तु सर्वेषां नृपस्य तु गुहालये ॥
सेनेशानां विपत्तिस्याद्यक्षतुण्डालये तथा ॥
स्वालये राजपत्नीनां दुर्गास्थानेऽन्ययोषिताम् ॥
मातृस्थानेऽन्त्यजातीनामोषधीनां कुबेरके ।
नृपवाहनशास्त्रोपजीविनां भास्करालये ॥
अन्यदेवालये तत्तद्भक्तानामपि लक्षयेत् ।
आस्थानमण्डप-सभामण्डप-प्राङ्गणेषु च ॥
महानसे नृपावासे क्रीडास्थाने विशेषतः ।
आचार्य-यजमानादिपदादि निलयेषु च ॥
चैत्यवृक्षादिपङ्क्ता रथाद्यदर्शनादयः ।
वल्मीकाद्याश्च फलदास्तत्तद्युक्तमार्गतः ॥

प्राकाराभ्यन्तरे प्राप्ते प्रमादादशुभे सति ।
अस्पृश्यागमने तत्र चण्डालाद्यैः प्रवेशने ॥
श्व-कुक्कुट-वराहोष्ट्र-गर्दभानां प्रवेशने ।
उदक्यया सूतिकया पाषण्डाद्यैस्तथापि वा ॥
कुण्ड-गोल-व्रतभ्रष्ट-तुरुष्कादिप्रवेशने ।
अन्यसूत्रिद्विजैः स्पृष्टे मोहादज्ञानतोऽपि वा ॥
महावातहते बिम्बे संसिक्ते वर्षबिन्दुभिः ।
विण्मूत्ररुधिरस्रावे बहुजल्पे च मैथुने ॥
एवमादिनिमित्ते तु जलसंप्रोक्षणं चरेत् ।
नैवासंप्रोक्षिते बिम्बे हरिर्वसति निश्चयः ॥
तस्माद् बिम्बविशुद्ध्यर्थं संप्रोक्ष्यैव समर्चयेत् ।
दोषाधिक्ये समुत्पन्ने लघुसंप्रोक्षणं चरेत् ॥
राष्ट्रक्षोभे च दुर्भिक्षे तन्त्रसंकरदूषणे ।
शूद्रैर्वाऽप्यनुलोमैर्वा पाषण्डैर्भ्रमितैरपि ॥
उदक्यया सूतिकया पतितैर्वाऽथ पातकैः ।
चण्डालाद्यैः प्रविष्टे च गर्भागारे विशेषतः ॥
सूतैर्वा कुण्डगोलाद्यैस्तथा देवलकादिभिः ।
श्व-कुक्कुट-वराहाद्यैः प्रविष्टे गर्दभादिभिः ॥
उलूक-गृध्र-काकाद्यैः प्रविष्टेऽन्तर्गृहे तथा ।
तुरुष्काद्यैः प्रविष्टे वा शुक्रशोणितयोरपि ॥
विण्मूत्रादेर्विसर्गे वा गर्भागारेऽर्धमण्डपे ।
त्र्यहादूर्ध्वं विहीने तु पूजने दीपवर्जने ॥
एकरात्रमतिक्रम्य देवे ग्रामान्तरे स्थिते ।
अग्निदाहेऽशनीपाते गर्भागारेऽर्धमण्डपे ॥
अन्यसूत्रार्चिते बिम्बे स्पृष्टे वा बुद्धिपूर्वकम् ।
अन्यैरनुक्तैर्दोषैश्च लघुसंप्रोक्षणं चरेत् ॥

चण्डालाद्यन्त्यजातीनां मरणे वा विशेषतः ।
शूद्रैर्वाऽथानुलोमैर्वा पाषण्डैः पतितादिभिः ॥
संस्पृष्टे वैष्णवे बिम्बे तुरुष्काद्यैर्म्लेच्छैः ।
स्पृष्टे चण्डालकाद्यैर्वा महापातकदूषितैः ॥
कुण्ड-गोलक-सुताद्यैर्दीक्षितैरर्चने कृते ।
अनुक्तानि च सर्वाणि दुरितान्यद्भुतानि च ॥
दृष्ट्वा तु यजमानश्च ये तत्परिसरे जनाः ।
ग्रामस्थिता जनाश्चैव राजा राष्ट्रं च यत्नतः ॥
ज्ञात्वा शास्त्रोक्तविधिना दोषजं भक्तितः फलम् ।
महासंप्रोक्षणं कुर्यान्महादोषापनुत्तये ॥
महादोषेषु सर्वत्र महाशान्तिर्विधीयते ।
पूर्वं स्थापितबिम्बस्य न साधारणहेतुना ।
स्यात्पुनः स्थापनं तस्मान्महासंप्रोक्षणं चरेत् ॥
महासंप्रोक्षणविधेर्नूतनस्थापनस्य च ।
स्वल्पो भेद इति प्रोक्तमृषिभिः काश्यपादिभिः ।" इति

सर्वेऽपीमेऽर्थाः केरलतन्त्रग्रन्थविष्णुसंहिता-तन्त्रसमुच्चयादावपि प्रतिपादिताः । ते यथा—

क्षेत्रे सूतिर्जननमङ्कणमण्टपादौ मूत्रासृगादिपतनं पतितादिवेशः ।
सोलूक-गृध्र-करट-श्व-खरोष्ट्र-कोल-गोऽष्ट्रक्ष-कुक्कुटपुरस्सरगर्भवेशः ॥
बिम्बस्य पातचलनादिरथप्रदाहस्वेद-प्ररोद हसितानि यथाऽद्भुतानि ।
छत्राक-माकु-मधुकादिसमुद्गकाश्च पूजाविलुप्तिरपि चासति दिष्टदोषे ॥
क्षुद्रान्यमन्त्रयजनं प्रतिषिद्धपुष्पाद्यपूजनमथो मरिचादिलेपः ।
एतानि तन्त्रकथितानि निमित्तकानि ज्ञेयानि तत्र गुरुलाघवभेदवन्ति ॥

"प्रासाद-देवहर्म्याणां चण्डाल-पतितादिषु ।
अतः प्रविष्टेषु तथा शुद्धिः स्यात् केन कर्मणा ॥"

"मनुष्याणां च पश्वादौ बहिर्मण्डलतो बहिः ।
जन्ममृत्यू तथा तत्र पुल्कसादिप्रवेशनम् ॥"
"द्वारास्त्वन्तर्मण्डलेऽथ प्रासादेषु च वेशनम् ।
पातक्याशौचिपाषण्डिवस्तॄणां रजकस्य च ॥
म्लेच्छानां तन्तुवायादिवर्णबाह्यजनस्य च ।
पुष्पिका-सूतिका-काक-चण्डालानां क्रमाद् गुरु ॥"
"श्व-चोर-व्रात्य-पाषण्डि-चण्डालादिप्रवेशनम् ।
... ... ... ...
एते चान्ये च विज्ञेया उत्पाता बहुदोषदाः ॥"
"चण्डाल-पतितोदक्याsसूतिकोन्मत्तकादिभिः ।
चौरैरशुचिभिर्म्लेच्छैः पाषण्डैर्देवलैस्तथा ॥
प्रविष्टे पूजने स्पृष्टे द्रव्याणां स्पर्शने तथा ।
दोषाश्च बहुधा प्रोक्तास्तन्त्रेष्वेव पृथक् पृथक् ॥"
"चण्डालादिप्रवेशो तु प्रथमावरणे सति ।
वास्तुहोमं ततोऽर्धे वा शान्तिहोमं समाचरेत् ॥"

तत्रैवानन्तदेवपद्धति गतान्यपि वचनानि कानिचन संगृह्यन्ते । तानि यथा—

"वल्मीकाद्यद्भुतानां दोषशान्तिस्तु कथ्यते ।
खननादिक्रियाभिस्तदपनीयोपलिप्य च ।
गोभिरभ्युक्षिते तस्मिन् हुत्वा चाद्भुतशान्तिकम् ॥
रक्षोघ्नं वास्तुहोमं च दत्वा वास्तुबलिं तथा ।
ब्राह्मणान् भोजयित्वा तु पुण्याहं वाचयेत्पुनः ॥"
"चण्डाल पुल्कस-व्याध-पुलिन्द्राद्यैर्विदूषिता ।
वल्मीकाहिश्मशानाद्या निम्ना भूरपि तच्छिला ॥"
"अथ धरणिसुराणां सर्वसोमद्रमिष्टम् ।
सुखदभवनिपानां वृद्धिदं वर्धमानम् ॥

धनदमिह विशां वै शंभुभागाधिकं यत् ।
शुभदमिह परेषां स्वस्तिकं शूद्रकाणाम्" ॥
"अद्भुतेष्वपि चान्येषु तद्दोषशमनाय वै ।
अस्त्रयागं पुरा कृत्वा सविशेषं शिवं यजेत् ॥"
अदीक्षितैश्च विप्राद्यैः स्पृष्टे वाप्यन्यलिङ्गिभिः ।
प्राग्वद् दारुमये कोशे पञ्चगव्यैः पृथक् क्रमात् ॥
समस्तैश्चावगाहं तु कारयित्वा षडाह्निकम् ।
स्नपनानामेकतमेनोपपत्त्याऽभिषेचयेत् " ॥
"शाव-सूतकिशूद्राद्यैः स्पृष्टेऽस्मिं च प्रमादतः ।
सर्वशान्तिर्भवेत्तत्र तद्वत् सर्वत्र मङ्गलम् ॥"
"प्रासादे प्राङ्गणे वापि मृते वा रुधिरक्षते ।
मूत्र-विष्ठादिसिक्ते च श्वोदक्यासूतिकादिभिः ॥
चण्डालैर्वा शृगालैर्वा गृध्रोलूकैश्च गर्दभैः ।
प्रविष्टे च प्रसूते च प्रायश्चित्तं निगद्यते ।"
"लिङ्गे पाषण्डचाण्डालश्वादिस्पृष्टेऽभिचारकैः ।
तथा रजस्वलास्पर्शे जुहोत्यशुचयेऽग्नये ॥" इति ।
"अन्तःसारादिवृक्षाणां ब्रह्मवर्णः प्रकीर्तितः ।
अन्तर्गृहे सुरासद्मे मुहूराणां शुभप्रदः ॥
शाखादिसर्वसाराश्च मण्डपादिषु शोभनम् ।
तेषु शाखातरुः प्रोक्तः सर्वसद्मे शुभं भवेत् ॥
.........क्रमुका बाह्यसारोदिताः स्थिताः ।
बाह्यमर्यादिषु कृता अन्तरेणाशुभं भवेत् ॥
सत्सच्छदादितरवः बाह्यान्तरपलं न चेत् ।
निःसारमिति वक्तव्यं शूद्रवर्णश्च जायते ॥
कारस्करादितरवः नीचजातिस्तु कथ्यते ।
अन्तरादिषु सद्मेषु सर्वकर्माशुभं मतम् ॥

मानुष्येषु सुरालेषु नीचजातिकृतः स चेत् ।
नीचजातिकृतं सम्रार्थहानिफलं भवेत् ।

इति देवालयादिचन्द्रिकागतानि वाक्यानि शिल्पशास्त्र-दृष्ट्या नीचजातीनां वृक्षाणामपि बाह्यमण्डपादावेवोपयोगः कर्तव्य इति बोधयन्ति । सति चैवं वृक्षाणामचेतनानामेव ब्राह्मणादि-विभागेन विभक्तानां देवालयेषु स्थानभेदो व्यवस्थित इति स्थिते, कैव कथा चेतनानां जातितो नीचानां विषये ।

"देवयात्राविवाहेषु यज्ञप्रकरणेषु च ।
उत्सवेषु च सर्वेषु स्पृष्टास्पृष्टिर्न विद्यते ॥
संकटे विषमे चैव दुर्गे चैव विशेषतः ॥
हट्टपट्टणमार्गे च संभवन्ति यथा भवेत् ।
शिल्पिनश्चित्रकाराद्या कर्म यत्साधयन्त्यलम् ॥
तत्कर्म नान्यो जानाति तस्मात् शुद्धा स्वकर्मणि ॥

इत्यादिवचनानि "तत्कर्म नान्यो जानाति तस्मात् शुद्धाः स्वकर्मणि" इत्युपसंहारात् गत्यन्तराभाव एवाशुद्धानामपि तात्का-लिकीं शुद्धिं मन्यन्ते । तथाच मन्दिरोद्धारादिकाले सामान्यतः-परिष्कारकाले वा सामान्यप्रायश्चित्तेन निर्वाहः क्रियते । विशिष्टो-द्धारादिप्रसङ्गे तु बालालयस्थापनादिकमेव प्रस्तूयते ।

न ह्यवर्णानां मन्दिरप्रवेशमन्तरेण देवतायाः विपत् संभाव्यते, येनापद्धर्माणां मन्दिरप्रवेशविषये व्यवस्थापनं स्यात् । बलात्कारे-णास्पृश्यादिसोपद्रवप्रवेशाशङ्कायां तु—

"सोपद्रवप्रवेशे च चण्डालादिप्रदूषिते ।
चोराद्युपद्रवयुते स्थले पूतवनान्तिके ॥
तस्माद् बिम्बं समादाय शुचौ देशे मनोरमे ।
यजमानाभिलषिते प्रतिष्ठाप्य समर्चयेत् ॥
एवं कर्तुमशक्तश्चेत् भूमौ बिम्बादि गोपयेत् ।

धनदमिह दिशां वै शंभुभागाधिकं यत् ।
शुभदमिह परेषां स्वस्तिकं शूद्रकाणाम्'' ॥
''अश्रुतेष्वपि चान्येषु तद्दोषशमनाय वै ।
अस्त्रयागं पुरा कृत्वा सविशेषं शिवं यजेत् ॥''
अदीक्षितैश्च विप्राद्यैः स्पृष्टे वाप्यन्यलिङ्गिभिः ।
प्राग्वद् दारुमये कोशे पञ्चगव्यैः पृथक् क्रमात् ॥
समस्तैश्चावगाहं तु कारयित्वा यथाह्निकम् ।
स्नपनानामेकतमेनोपपन्याऽभिषेचयेत् '' ॥
''शाव-सूतकिशूद्राद्यैः स्पृष्टेऽग्नौ च प्रमादतः ।
सर्वशान्तिर्भवेत्तत्र तद्वत् सर्वत्र मङ्गलम् ॥''
''प्रासादे प्राङ्गणे वापि मृते वा रुधिरक्षते ।
मूत्र-विष्ठादिसिक्ते च शवोदक्यासूतिकादिभिः ॥
चण्डालैर्वा शृगालैर्वा गृध्रोलूकैश्च गर्दभैः ।
प्रविष्टे च प्लुते च प्रायश्चित्तं निगद्यते ।''
''लिङ्गे पाषण्डचाण्डालश्वादिस्पृष्टेऽभिचारकैः ।
तथा रजस्वलास्पर्शे जुहोत्यशुचयेऽग्नये ॥'' इति ।
''अन्तःसारादिवृक्षाणां ब्रह्मवर्णः प्रकीर्तितः ।
अन्तर्गृहे सुरासद्मे भूसुराणां शुभप्रदाः ॥
शाखादिसर्वसाराश्च मण्डपादिषु शोभनम् ।
तेषु शाखासारः प्रोक्तः सर्वसद्मे शुभं भवेत् ॥
.........प्रमुक्ता बाह्यसारोदिताः स्थिताः ।
बाह्यमर्यादिषु कृता अन्तरेणाशुभं भवेत् ॥
सारच्छदादितरवः बाह्यान्तरयलं न चेत् ।
निःसारमिति वक्तव्यं शूद्रवर्णश्च जायते ॥
कारस्करादितरवः नीचजातिस्तु कथ्यते ।
अन्तरादिषु सद्मेषु सर्वकर्माशुभं मतम् ॥

मानुष्येषु सुरालेषु नीचजातिकृतः स चेत्।
नीचजातिकृतं सद्वार्थहानिफलं भवेत्।

इति देवालयादिचन्द्रिकागतानि वाक्यानि शिल्पशास्त्रदृष्ट्या नीचजातीनां वृक्षाणामपि बाह्यमण्डपादावेवोपयोगः कर्तव्य इति बोधयन्ति। सति चैवं वृक्षाणामचेतनानामेव ब्रह्मणादिविभागेन विभक्तानां देवालयेषु स्थानभेदो व्यवस्थित इति स्थिते, कैव कथा चेतनानां जातितो नीचानां विषये।

"देवयात्राविवाहेषु यज्ञप्रकरणेषु च।
उत्सवेषु च सर्वेषु स्पृष्टास्पृष्टिर्न विद्यते॥
संकटे विषमे चैव दुर्गे चैव विशेषतः॥
हट्टपट्टणमार्गे च संभवन्ति यथा भवेत्।
शिल्पिनश्चित्रकाराद्या कर्म यत्साधयन्त्यलम्॥
तत्कर्म नान्यो जानाति तस्मात् शुद्धा स्वकर्मणि॥

इत्यादिवचनानि "तत्कर्म नान्यो जानाति तस्मात् शुद्धाः स्वकर्मणी" त्युपसंहारात् गत्यन्तराभाव एवाशुद्धानामपि तात्कालिकीं शुद्धिं मन्यन्ते। तथाच मन्दिरोद्धारादिकाले सामान्यतः-परिष्कारकाले वा सामान्यप्रायश्चित्तेन निर्वाहः क्रियते। विशिष्टोद्धारादिप्रसङ्गे तु बालालयस्थापनादिकमेव प्रस्तूयते।

न ह्यवर्णानां मन्दिरप्रवेशमन्तरेण देवतायाः विपत् संभाव्यते, येनापद्धर्माणां मन्दिरप्रवेशविषये व्यवस्थापनं स्यात्। बलात्कारेणास्पृश्यादिसोपद्रवप्रवेशशङ्कायां तु—

"सोपद्रवप्रवेशे च चण्डालादिप्रदूषिते।
चोराद्युपद्रवयुते स्थले पूतवनान्तिके॥
तस्माद् बिम्बं समादाय शुचौ देशे मनोरमे।
यजमानाभिलषिते प्रतिष्ठाप्य समर्चयेत्॥
एवं कर्तुमशक्तश्चेद् भूमौ बिम्बादि गोपयेत्।

इत्यादि वचनैर्भूम्यादौ देवतास्थापनमेव विधीयते ; नत्वस्पृश्यानामेव हस्ते देवालयसमर्पणम्, तत्साधारण्येन मन्दिरप्रवेशाभ्यनुज्ञानं वा । स्पष्टं चैतत् विमानार्चनकल्पेऽपि—चोरैः शत्रुभिः परचक्रभयाद्वा ग्रामे संकुले संभवति, भयरक्षार्थं कौतुक-स्नपनोत्सवबलि बेरलौहिकप्रतिमानां देवीनां च तिरोधानं कारयेत् । गुप्ते शुचौ देशेऽवटं खनित्वा सिकताः प्रक्षिप्य दर्भानास्तीर्यावटे महीदेवामभ्यर्च्य "आपो हिष्ठे" ति प्रोक्ष्याचार्योऽर्चको यजमानो वा भक्तैस्सार्धं देवागारं प्रविश्य देवं प्रणम्य "यावत्कालं भयमस्ति, तावत्कालं धरण्या सह शयीथाः जनार्दन!" इति "बिम्बस्थां शक्तिं ध्रुवे समारोपयेत्, बिम्बाभावे हृदये समारोपयेत् "इति ।

अस्पृश्यानां देवदर्शनापेक्षा तु—तद्योग्यशास्तृ-भद्रकाली ज्येष्ठमातृकादिपारशवादिपूज्यमानदेवतादर्शनमात्रसाधुत्वव्यवस्थापनेन पूरणीया, नतु तदयोग्यदेवतानां मन्दिरेषु दर्शनव्यवस्थापनेन । देवतान्तराणां दर्शनमुत्सवादिकाले कौतुकविग्रहादिदर्शनेनैव सफलीकर्तुं शक्यते । अस्मिन् प्रसङ्गे—

लिङ्गानि सायककरादिपदोन्निताग्नि-
हस्तान्वितानि चरणांशविमुक्तियत्नृप्त्या ।
स्युर्वर्णिनां मुखभुजोरुपदोद्भवानाम्
पञ्चाग्निपावक जगत्परिसंख्यकानि ॥"
अङ्घ्र्यूर्ध्वशाककमकृतहृसनेन भूयो
द्वे चैकमप्यनुविलोमकुलोत्थयोः स्युः ।
तान्युत्तरोत्तरकुलप्रभवेषु चानु-
लोम्यात् प्रकल्पयतु वैककरादिकानि ॥"

इति तन्त्रसमुच्चयश्लोकद्वयोक्तो न्यायो न विस्मरणीयः ।
हि उत्तमोत्तमानां मध्यमाधमपूज्यपूजनादावधिकारो वर्तते,

मध्यमाधमानां तु स्वोत्तमपूज्यदेवतापूजनादौ नाधिकार इति व्यवस्थाप्यते ।

इदमेवाभिप्रेत्य—अनन्तशयनमहाराजनियुक्तमन्दिरप्रवेशजिज्ञासासमित्या वर्णानां मन्दिरेषु वर्णानामेवाधिकारः, वर्णावर्णसाधारणदेवालयादिनिर्माणेनवावर्णाः सन्तोषणीया इति विशदीकृतम् ।

सति चैवमवर्णानां मन्दिरप्रवेशेन देवतानामशुद्धेरेव शास्त्रीयत्वात् विना प्रायश्चित्तं तत्पूजनं भगवच्छासनोल्लङ्घनमेव, इति विना प्रायश्चित्तानुष्ठानमस्पृश्यप्रवेशादिदूषितदेवतापूजकानां देवतापूजने नाधिकारः ; वेददूषकत्वेनाचार्यलक्षणस्यैवाभावात् । अत एव विमानार्चनकल्प आचार्यलक्षणप्रकरणे—देवब्राह्मण-प्रासादवेददूषका अपाङ्क्तयाजकाश्च वर्जनीयकोटौ पठ्यन्ते । स्पष्टं च भृगुसंहितायां प्रकीर्णाधिकारे प्रायश्चित्तप्रकरणे विना प्रायश्चित्तानुष्ठानं पूजादि कुर्वाणानां पातकित्वं प्रतिपादितम् । तद्यथा—

"प्रायश्चित्तनिमित्ते ते संप्राप्ते यस्तु मूढधीः ।
अकृत्वा निष्कृतिं कुर्यात् कारयेत्कर्म चोत्तरम् ॥
लोभाद् मोहादथाज्ञानाद् अनादृत्य च शासनम् ।
भगवच्छासनद्रोही स भवेत् पातकी जनः ॥" इति ।

यदा तु—"प्रासादगर्भपीठार्चाः शरीरत्वेन शार्ङ्गिणः ।
कथिताः सर्वदा रक्ष्याः, विप्रैरुत्पातशङ्किभिः ॥"

इत्यादिवचनैर्देवालयगताः भागाः स्थूल-सूक्ष्मशरीरत्वादिना गृह्यन्ते, तदा तु मन्वादिस्मृत्युक्तानि अस्पृश्यस्पर्शदोषतामतिपादकान्यपि वचनान्यत्रानुसन्धेयानि ।

अत्रावसरेऽनन्तशयनमहाराजनिर्वाचितमन्दिरप्रवेशजिज्ञासासमितिरप्यवर्णानां मन्दिरप्रवेश आगमशास्त्रविरुद्ध एव, आ-

गमशास्त्राण्यपि तत्र विशिष्टानि प्रमाणानि, इत्यादिविवेचन-प्रसङ्गे यानि वचनानि समग्रहीत्, तान्यपि संगृह्णीमः ।

वृद्धहारीतः—प्रासाद-देवहर्म्याणां चण्डालपतितादिषु ।
अन्तःप्रविष्टेषु तथा शुद्धिः स्यात् केन कर्मणा ॥

विष्णुः—"द्वारास्त्वन्तर्मण्डले च प्रासादेषु च वेशनम् ।
पातक्याशौचिपाषण्डि प्रसूणां रजकस्य च ॥
म्लेच्छानां तन्तुवायादिवर्णबाह्यजनस्य च ।
पुष्पिकासूतिकाकारुचण्डालानां क्रमाद् गुरु ॥"
"चिताग्निसन्निभं विष्णोर्बिम्बमुत्पातदूषितम् ।
अकृतायां तु निष्कृत्यामपूज्यं सर्वथा बुधैः ॥"

भृगुः—"चण्डालैरन्त्यजैश्चैव तथान्यप्रतिलोमजैः ।
म्लेच्छैश्च नीचचण्डालैर्गुरुनिन्दादिदूषितैः ॥
एवमादिभिरस्पृश्यैर्देवागारे विशेषतः ।
स्पृष्टे प्रवेशने पापा पूजाकाले च दर्शने ॥"

तत्त्वप्रदीपिका—"चोर-पातकि-चण्डाल-चातुर्वर्ण्यबहिष्कृताः ।
श्वानः पाषण्डिका वर्ज्या म्लेच्छदेशसमुद्भवाः ॥
जम्बूकाः पतिता नारी पुष्पिता च तथैव च ।
तैस्तु सम्मिश्रितैरन्यैरन्त्यजैश्चैव पद्मज ॥
देवे सन्निहिते स्पृष्टे पुनः कलशसंभवः ।
मृते गर्भगृहासन्ने रक्तादिपतिते तथा ।
प्रदूषणोक्तक्रमेणैव शान्तिं कुर्याद्विचक्षणः ॥"

ज्ञानोदयः—"चण्डालपतितोदक्याद्दुर्जनस्पर्शनादिषु ।
स्नानशुद्धिश्च कर्तव्या बिम्बशुद्धिश्च शान्तये ॥"

कलशपराङ्गुष्ठानम्—प्राकारान्तः पुष्पिका-सूतिका-बौद्ध-पुल-कसानां प्रवेशोऽशुद्धिः । पुनर्बहिर्मण्डलस्यान्तः तक्षलादिप्रवेशोऽशुद्धिः । दीपशालायामन्तः रजक-क्षुरक-तन्तुवायादीनां प्रवेशोऽशुद्धिः-

पुनर्मध्यहारायां पञ्चप्रासादेषु च पतिताशौचिपाषण्डिदाहकानां चर्णयाद्यजनस्य च प्रवेशोऽशुद्धिः स्यात्" इति ।

तन्त्रसमुच्चयः—

"क्षेत्रे मृतिर्जननमङ्कुणमण्टपादौ
मूत्रासृगादिपतनं पतितादिवेशः ।
सोलूक-गृध्र-करट-खरोष्ट्र-कोल
क्रोष्ट्रक्ष-कुक्कुट-सुररसरणप्रवेशः ।
बिम्बस्य पातचलनादिरथ मदाह-
स्वेद-प्ररोद-हसितानि तथाद्भुतानि ।
छत्राक नाकु-मधुकादि समुद्गमाश्च
पूजाविप्लुतिरपि चासति दिष्टदोषे ॥
क्षुद्रान्यमन्त्रयजनं प्रतिषिद्धदुष्ट-
पुष्पादिपूजनमथो मरिचादिलेपः ।
एतानि तन्त्रकथितानि निमित्तकानि
ज्ञेयानि तत्र गुरुलाघवभेदवन्ति ॥" इति ।

अस्मिन् प्रसङ्गे केरलदेशे तत्तज्जातीनां विप्रकर्षव्यवस्थापकतयाभिमतं प्रायश्चित्तविवरणीगतं वचनमपि संग्रहमर्हति । तत्तु यथा—

शूद्रः षट्कं त्रिकं वा पतितरजकयो विप्रकृष्याः पदानाम्
षट्कं स्त्रीधर्मिणी तद्युगममुकयुगं दाहकः शौण्डिकश्च।
तक्षैवं तद्युगं पुल्कस-मृगयु-दिवाकीर्तयोऽत्रान्तरस्थाः
षट्त्रिंशत् सूतिका तद्वलमहिकृतितुल्यं तु पुल्कसाद्याः ॥

इति । अनेन—शूद्राणां षट्षट्कं पदत्रयं वा, पतितरजकयोः षट् पदानि, रजस्वलाया द्वादशपदानि,, तक्ष्णः, दाहकशौण्डिकयोश्च चतुर्विंशतिपदानि; पुल्कस-मृगयु-दिवाकीर्तिप्रभृतीनामष्टाचत्वारिंशत् पदानि, सूतिकादीनां पुल्कसतोऽधिकानां

शौण्डिकतो न्यूनानां च षट्त्रिंशत् पदानि विप्रकर्षोऽपेक्ष्यत इति बोध्यते। अस्मिन् प्रसङ्गे—केरलीयैस्तदीयधर्मग्रन्थतोऽवगतं युगपरिमाणमपि संग्रहणीयम्, येन—

"युगं च द्वियुगं चैव त्रियुगं च चतुर्युगम्"

इति पराशरस्मृतिविवरणमपि सुष्ठु संपाद्येत, तद्यथा—योग्यप्रायश्चित्तनिबन्धः—

"इत्यत्र युगमानं स्यादाचण्डालं हि षट्पदम्।
चण्डालास्त्रिविधा ज्ञेया मुख्य-मध्यम-हीनकाः।
तेषां तु युगमानं स्यात् षण्-नव-द्वादशात्मकम्।
हीना भवन्ति मृगयु-पुल्कस-श्वपचादयः।
मुख्याः शौण्डिकतक्षाद्याः सर्वेऽन्ये मध्यमाः स्मृताः इति।

अत्र—"चितानाग्निनिभं विष्णोर्बिम्बमुत्पातदूषितम्"

इति विष्णुसंहितावचनेन देवस्य मन्दिरगतस्य चितानाग्निसमत्ववर्णनाद् चितानाग्निनाशकरास्सर्वेऽपि मन्दिरगतदेवतायास्तत्सान्निध्यस्य वा नाशकरा इति सूच्यते। तदर्थं च कल्पसूत्राद्यनुसारेणाग्निनाशकरा अपि संगृह्यन्ते। तत्र बोधायनः—अथारण्योर्घ्योत्पत्तिं व्याख्यास्यामः—अप्स्वाग्निर्निमित्तैर्विनश्यति अमेध्य-श्व-चण्डाल-शूद्र-वायस-पतित-रासभ-रजस्वलादिभिश्च संस्पर्शे नारण्योर्विनाश इति। अत्रारणिनाशेनाग्निविनाशो विवक्ष्यते। तदुक्तं प्रायश्चित्तसमुच्चये—अरणिविनाशेनाग्निविनाश उक्त इति। अन्यत्राप्युक्तम्—"चण्डालपतितोदक्यासूतिकागर्दभादिभिः। संसर्गेऽग्निविनाशः स्यादाद्यधीतेति केचन।" इति। अत्र चण्डालग्रहणं सर्वप्रतिलोमोपलक्षणम्। अत्र प्रतिलोमसन्निकर्षे आसत्त्यापि विवक्ष्यते, नतु स्पर्शमात्रम्। तदुक्तं पराशरबृहस्पतिभ्याम्—

"युगं युगद्वयं चैव त्रियुगं च चतुर्युगम्।
चण्डाल-सूतिकोदक्या-पतितानाम्: क्रमात्॥" इति।

अत्र युगशब्देन षट्पदपरिमितो दण्डो विवक्ष्यते, चण्डाल-शब्देन पूर्वोक्तमुख्यमध्यमाधमास्तक्षादयो गृह्यन्ते। तथाच तेषां तक्षादीनां तावत्परिमितस्थानतो बहिरवस्थाने नाग्निनाशः, अन्यथा त्वग्निनाशः। तदेवं न केवलमागमशास्त्रतः, किन्तु शिल्प-शास्त्रेण, मन्वादिस्मृतिभिः, कल्पसूत्रैश्च विज्ञायतेऽन्त्यजानां मन्दिरप्रवेशेन देवतायास्सान्निध्यविनाश इति। तथाच—अवर्णा-नामपि जन्ममात्रेणास्पृश्यानां सत्त्वात्, चातुर्वर्ण्येनैव समाजस्य स्थितिरिति वादो निरवसरः। यथाच—

"ब्राह्मणः क्षत्रियो वैश्यस्त्रयो वर्णा द्विजातयः।
चतुर्थ एकजातिस्तु शूद्रो नास्ति तु पञ्चमः॥"

इति पञ्चमस्य वर्णस्यैव निषेधपरम्, नतु जातिविशेषस्य, व्यक्तं चैतद् मनुस्मृतिव्याख्यास्वपि कुल्लूकभट्टादिकृतासु।

ऋग्वेदेऽ १७, ५३, १६, मन्त्रे "पाञ्चजन्या सुवृक्तिषु" इत्याम्नायते। इदं च सायणाचार्यैरेवं व्याख्यातम्—निषादप-ञ्चमाश्चत्वारो वर्णास्तत्सम्बन्धिनीसु प्रजासु इति। अत्र चत्वारो वर्णा निषादः पञ्चम इति वर्णितम्, नतु निषादपञ्चमा वर्णा इति। तथाच विशदं निषादस्य वर्णत्वमेव निषिध्यत इति ज्ञाप्यते, इति मनुस्मृतिस्तद्व्याख्याश्चोक्तमन्त्रमूला अपि प्रमाणम्। एतेन—पुरुषसूक्तं विहाय वेदे कुत्रापि चातुर्वर्ण्यस्य नोल्लेख इति शङ्कापि—परास्ता। तथाच शुद्धब्राह्मणादिव्यतिरिक्तानां संकीर्णानामनुलोम-जानां प्रतिलोमजानां चावर्णत्वमपि श्रुत्यारूढमेव। अत्रानुसन्धेयो-ऽसमनुस्मृतिव्याख्या कुल्लूकभट्टकृता त्वियमेव—"पञ्चमः पुनर्वर्णो नास्ति; संकीर्णजातीनां त्वश्वतरादिवत् मातापितृजातिव्यति-रिक्तजात्यन्तरत्वाद् न वर्णत्वम्। अयं च जात्यन्तरोपदेशः शास्त्रे व्यवहारार्थः" इति।

एतेन—अन्त्यजानां स्पर्शास्पर्शविचारोऽपि—व्याख्यातः;

यतः सर्वासु स्मृतिषु ऐककण्ठ्येन, न केवलं स्मृतिषु किन्त्वायुर्वेद-शिल्पशास्त्रेष्वपि विशदमन्त्यजानां स्पर्शेन प्रायश्चित्तोपता प्रतिपाद्यते ।

यद्यपि स्पर्शशब्देनावयवसंयोगः साक्षादेव विवक्ष्यते, तथापि चण्डालस्पर्शमात्रे परम्परासंयोगोऽपि स्पर्श एवेति शूलपाणिकृत-जातिविवेके विवेचितम् । एतेन—विरोधे त्वनपेक्ष्यं स्यादिति सूत्रं शाबरं भाष्यमपि—व्याख्यातम्; तस्य चण्डालस्पर्शेतरविषयत्वात् । व्यक्तं चैतत्तन्त्रवार्तिके १०० तमे पृष्ठे विवेचितम् ।

आयुर्वेदाचार्याश्चरकादयश्चण्डालादिच्छायातिक्रमणमपि दोषाय मन्वानाः परम्परासम्बन्धोऽपि स्पर्शपदार्थ इति मन्यन्त एव ।

तदत्र विज्ञाणामयुर्वेदपण्डितप्रवराणामाशयं संग्रह प्रकाशयामः । तद्यथा महामहोपाध्याय श्रीयुक्त गणनाथसेनसरस्वतीमहोदया मन्यन्ते—

"गदाशनादिदुश्चरितशतपरायणत्वादर्शनात् पतितानां सहवासो न केवलं धर्मशास्त्रे, प्रत्युत वैद्यकग्रन्थेष्वपि निषिद्धः । यथा चरके" "न पतितैः सहासीत" इत्यादिवचनैः । अत्र च हेतुर्विशेषेण तत्सहवासस्य कुष्ठादिनिन्दितव्याधिकारित्वमेव; प्रायस्तादृशजनेषु तत्तद्रोगबाहुल्यदर्शनात् । तदुक्तं सुश्रुते—"प्रसङ्गाद्गात्रसंस्पर्शान्निःश्वासात्सहभोजनात् । सह शय्यासनाच्चापि गन्धमाल्यानुलेपनात् । कुष्ठं ज्वरश्च शोषश्च नेत्राभिष्यन्द एव च । औपसर्गिकरोगाश्च संक्रामन्ति नरान्नरम् ॥" इति ॥ किञ्च कदाचारपराणां शरीरेषु सांक्रामिकरोगमयचुर्णमाइक्रस्कोपयन्त्रसाहाय्येन पाश्चात्यैरपि बहुधा परीक्षाशतैर्निर्णीतमेवेति युक्तिशास्त्राभ्यां सम्यगनुमतैव येषामश्विर्हीनानामस्पृश्यतेति सम्मतिः—महामहोपाध्यायोपाधिक-श्रीगणनाथसेनशर्मणः—इति ।

श्रीयुक्तयामिनीभूषणरायमहोदया अप्यत्रैवानुकूलाः । तद्यथाः—

"आयुर्वेदशास्त्रस्य हि स्वास्थ्यमूलकत्वात् दृष्टफलकत्वमेव प्राधान्येनाङ्गीकर्तव्यम् । तच्च दृष्टफलं विधिष्वारोग्यं निषेधेषु रोगश्चेति । तथाचायुर्वेदे चरकादिषु ग्रन्थेषु "सहासीत नोन्मत्तैर्न पतितैर्न क्षुद्रैरि"त्यादिवचनैः पतितैः स्वकर्मभ्रष्टैर्हीनैर्म्लेच्छैः चण्डालादिभिः समभासनस्य निषेधादेभिः सह संसर्गेण रोगसम्भावना वर्तत इति । अत्र पतितशब्देन स्वकर्मभ्रष्टो यो विवक्ष्यते, स हि चण्डालसंसर्ग्यपि भवति, इति तत्संसर्गिसंसर्गस्य दोषत्वे तत्संसर्गस्य दोषत्वं कैमुतिकन्यायसिद्धमेव । एवमपि "न क्षुद्रैरि"ति पुनस्तत्संसर्गस्य निषेधेनेदं ज्ञायते—यद्विशेषप्रतिषेधोऽत्र क्रियत इति । तथाचायुर्वेदोक्तानामपि निषेधानां क्वचित्कर्मविपाकाध्यायोक्तरीत्या जन्मान्तरीयफलकत्वेऽपि "अत्युत्कटैः पुण्यपापैरिहैव फलमश्नुते" इति न्यायेन चण्डालादिसंसर्गस्यैहिकरोगनिदानत्वमेव सम्भाव्यते । अभक्ष्यभक्षणदूषितानां श्वपचादीनामपि क्रिमिकुष्ठादिरोगसम्बन्धात् औपसर्गिकरोगाणां सहासीनेष्वन्येषु संक्रमणं सम्भवति । तदुक्तं सुश्रुते—'प्रसङ्गाद्गात्रसंस्पर्शात्' इत्यादि । इदमेवाभिप्रेत्य आमशोफच्छेदकस्य पक्वशोफाच्छेदकस्य च "यश्छिनत्त्याममज्ञानात् यश्च पक्वमुपेक्षते । श्वपचाविव मन्तव्यौ तावनिश्चितकारिणौ" ( सु० सूत्र० अ० १७ ) इति वचनेऽसंव्यवहार्यत्वे श्वपचदृष्टान्तत्वमुक्तम् । अस्मिन् प्रसङ्गे इदमपि सूच्यते—यत् "न चैत्यध्वजगुरुपूज्याप्रशस्तच्छायामतिक्रमे" दिति वचने अप्रशस्तपदेन श्वपचादिविवक्षणात् तच्छायातिक्रमणमपि निषिध्यमानं तेषामन्येषाञ्च कियद्दूरमन्तरेणावस्थानमेव समुचितम्—इति ।

तथाच धर्मशास्त्राणामपि आयुर्वेदेन महान् सम्बन्धो वर्तत इति यावच्छक्ति धर्मशास्त्राविरोधेन, यत्र पृथगायुर्वेदेऽपि निषेधस्तत्र

यथावदेव यथाशक्ति तस्य परित्यागेन व्यवहरणमेव सर्वेषां समुचितमिति—

यामिनी भूषणरायः।

एम०ए०, एम० बी० एम० आर० ए० एस०, प्रेसिडेन्ट आल इन्डिया आयुर्वेदिक कान्फरन्स्, प्रिंसपाल—अष्टांगायुर्वेदविद्यालयः।

शिल्पशास्त्रगतान्यपि वचनान्यधो निर्दिश्यमानानि चाण्डाल-चर्मकारादीनां ग्रामाद् बहिः क्रोशाद्वयादूरे एवावासव्यवस्थापनम्, तथा चण्डालादिस्त्रीणां नगरमध्ये ग्राममध्ये वा प्रातःकाले मलनिष्कासार्थं केवलं प्रवेशाधिकारं च शासति इदमेव गमयन्ति—यत् चण्डालादीनां ग्रामप्रवेशादिकं यथेच्छं न योग्यमिति। अत्रैतानि वचनानि सचित्रहिन्दीशिल्पशास्त्रसाराभिधे ग्रन्थे उल्लिखितानि। यथा नगरव्यवस्थाप्रकरणे—

वासं सर्वत्र वाप्यादि सुत्तरे पुष्पवाटिका।
दक्षिणे गणिकावासं परितः शूद्रजन्मनाम्॥
वैश्यानां वणिजां प्राच्यां मध्ये राजापणो भवेत्।
प्रागुदीच्यां कुलालानां वापकानां च वायवे॥
जालिकानां च वायव्ये सूनानां पश्चिमे तथा॥

इति काश्यपसंहिता।

तैलविक्रयिणां सौम्ये तक्ष्णां चाप्यनले तथा।
वायव्ये काष्ठकादीनां रजकानां च पश्चिमे॥

इति भृगुसंहिता।

क्रोशाद्वये तु तस्यार्धे बहिश्चण्डालपक्कणम्।
प्रागुत्तरेण तु क्रोशात् बहिः पितृवनं भवेत्॥
अनुकानां तथान्येषां युक्त्यावासं प्रकल्पयेत्॥

इति मयमतम्।

देवालयमथ मध्ये परितो ग्रामो यथा विहितः।
परितः सर्वजनालयमुदितं किञ्चित्ततो दूरे॥

चण्डालकुटीराणि तत्रैव च कौलिकानां हि ॥ अ० ११।
चण्डालकुटीराणि पूर्वायां क्रोशमात्रे स्युः ।
चण्डालयोषिदाद्यास्ताप्रायःसीसभूषणाः सर्वाः ॥
पूर्वाह्णे मलमोक्षक्रियोचिता ग्रामप्रावेश्याः ॥

मयमतम् ( अ० ९ )

चाण्डालचर्मकारश्मशानं तोयाशयापयानं स्यात् ।
एतेषामपि तत्तद्दूरे देशे श्मशानं स्यात् ॥ भृगुसंहिता ।

एतेन—शिल्पशिक्षणमहत्त्वाभिधोऽपि "कृष्णाजी विनायक वझे" महोदयसंपादितो ग्रन्थोऽपि—व्याख्यातः । तत्रापि हि नगररचनाविद्यायां पूर्वोद्धृतान्येव सर्वाणि वचनानि संगृहीतानि । पुस्तकद्वयेनापीदमेव संसूच्यते—यत् अन्त्यजानां न केवलं यथेच्छं विना कार्यं ग्रामप्रवेशयोग्यता, न वा सर्वसाधारणं जलाशयादिसम्बन्धयोग्यता, किन्तु न ब्राह्मणक्षत्रियवैश्यशूद्ररथ्यादिष्वावासयोग्यतापीति । तथाच आयुर्वेदशास्त्रतः, तथा शिल्पशास्त्रतोऽपीदं सिद्ध्यति, यच्चण्डालदयो न ग्रामान्तःप्रवेशनीयाः, न वा सर्वसाधारणकूपादिव्यवहारयोग्या इत्यादीति । एतदेवाभिप्रेत्योक्तं भगवता मनुना—

चण्डालश्वपचानान्तु बहिर्ग्रामात् प्रतिश्रयः ।
अपपात्राश्च कर्तव्या धनमेषां श्वगर्दभम् ॥ १ १ - ५१ ॥
वासांसि मृतचेलानि भिन्नभाण्डेषु भोजनम् ।
कार्ष्णायसमलङ्कारः परिव्रज्या च नित्यशः ॥ ५२ ॥
न तैः समयमन्विच्छेत् पुरुषो धर्ममाचरन् ।
व्यवहारो मिथस्तेषां विवाहः सदृशैः सह ॥ ५३ ॥
अन्नमेषां पराधीनं देयं स्याद् भिन्नभाजने ।
अयान्भवं शवं चैव निर्हरेयुरिति स्थितिः ॥ ५४ ॥

रात्रौ न विचरेयुस्ते ग्रामेषु नगरेषु च ।
दिवा चरेयुः कार्यार्थं चिह्निता राजशासनैः ॥ ५५ ॥
वध्यांश्च हन्युः सततं यथाशास्त्रं नृपाज्ञया ।
वध्यवासांसि गृह्णीयुः शय्याश्चाभरणानि च ॥
( ५६ । अ० १० ) इति ।

अथ साधकबाधकप्रमाणबलविचारार्थं प्रवर्तमाना वयं स्पर्शास्पर्शविषयाणि प्रमाणजातानि समालोचयामः । तत्रेदं प्रथमत आलोचनीयम्—यत्कलियुगे स्पर्शदोषो वर्तते वा न वेति । अत्र केचित्प्रत्यवतिष्ठन्ते—न कलौ स्पर्शदोष एव समस्ति । अत एव हि पराशरस्मृतौ—"त्यजेद्देशं कृतयुगे त्रेतायां ग्राममुत्सृजेत् । द्वापरे कुलमेकन्तु कर्तारन्तु कलौ युगे"—इति कलौ कर्तृमात्रस्य दुष्टत्वमुपवर्ण्यमानमुपपद्यते । अत्र हि कर्तृशब्देन महापातकादिकर्तैव विवक्ष्यते । तथाच कलौ युगे ब्रह्महत्यादिपापाचरणमेव पातित्यनिदानम् , न तु पतितसंसर्गविशेषमात्रमिति नियतमूरीकर्तव्यम् । अन्यथा हि—"कृते सम्भाषणादेव त्रेतायां स्पर्शनेन च । द्वापरे चान्नमादाय कलौ पतति कर्मणा"—इति कर्ममात्रस्य पातित्यनिदानत्वमुपवर्णितमसङ्गतमेव स्यात् । अत्र हि "त्रेतायां स्पर्शनेन च" "कलौ पतति कर्मणा" इति विभागावसरे हि स्पर्शनपदस्य कर्मपदस्य च प्रयोगेणेदं स्पष्टमवगम्यते—यत् स्पर्शदोषो द्वापरे, सुतरां कलौ च नास्त्येवेति । तथाचावश्यमिदमूरीकर्तव्यम्—यत्पराशराचार्याणामाशयः कलौ न स्पर्शदोषोऽस्तीति । अत्र चेदमवश्यं सूचनीयं समापतितम्—यत्स्मृत्यन्तरेण विरोधे कलौ पराशरस्मृतिरेव समादरणीया, विशेषतश्च प्रायश्चित्तविषये । तदुक्तं माधवीये—एतदेव विवक्षित्वा प्रतिजज्ञे विशेषतः । पराशरेण यत्प्रोक्तं प्रायश्चित्तमितीदृशम्—इति । एतेन—

ब्रह्महा मद्यपः स्तेनो गुरुतल्पग एव च ।
एते महापातकिनो यश्च तैः सह संवसेत् ॥
संलापस्पर्शनिश्वाससहयानासनाशनात् ।
याजनाध्यापनाद्यौनात्पापं संक्रमते नृणाम् ॥
एते महापातकिनस्तत्संसर्गी च पञ्चमः ।
यो येन पतितेनैषां संसर्गं याति मानवः ।
स तस्यैव व्रतं कुर्यात्तत्संसर्गविशुद्धये ॥

इत्यादिवचनान्यपि—व्याख्यातानि; एतेषां सर्वेषां युगान्तरविषयत्वस्यैवोरीकर्त्तव्यत्वात् । एतेन—पतितान्नभक्षणादिनिषेधा अपि व्याख्याताः । तथाच पतितस्पर्शस्य चण्डालादिस्पर्शस्य च कलौ युगे न दोषत्वमेव । यत्तु युगान्तरे चाण्डालादिस्पर्शस्य दोषत्वमुपवर्णितम्, तदपि नैकान्तेन, तीर्थविवाहादिषु हि स्पर्शदोषो नास्तीति बहुषु स्मृतिषु निरूपितम् ।

तद्यथा:—

देवयात्राविवाहेषु यज्ञप्रकरणेषु च
उत्सवेषु च सर्वेषु स्पृष्टास्पृष्टिर्न विद्यते ॥ अत्रिः ॥
दाने विवाहे यज्ञे च संग्रामे देशविप्लवे ।
आपद्यपि हि कष्टायां सद्यः शौचं विधीयते ॥ याज्ञ० ॥

इत्यादि । तथाचापदाद्यवस्थासु चण्डालादिस्पर्शस्य युगान्तरेऽपि दोषत्वनिरासात्कलौ सर्वथा तद्दोषत्वस्य पराशराचार्यैर्निषेधसूचनाच चण्डालादिस्पर्शो नेदानीं दोषाय भविष्यतीति ।

अत्र समुचितमस्मदीयमाशयमुपवर्णयितुं वयं पश्यामः प्रथमं प्रामाणिकानां निबन्धकाराणामन्येषामाशयः संग्रहणीय इति । अत्र यद्यपि माधवाचार्याः कृते सम्भाषणादेवेति श्लोकव्याख्यावसरे कलौ पतितसम्भाषणादिना न स्वयं पतति, किन्तु यथादिना कर्मणैव पतितो भवतीत्येव—व्याचक्षते । तथापि नात्र माधवा-

चार्याणां पतितसम्भाषणादीनां न दोषत्वमित्याशयोऽभ्युपगन्तुं शक्यते। अन्यथा हि "कर्तारन्तु कलौ युगे" इति विवरणावसरे "कर्तृत्यागः सम्भाषणादिवर्जनम्" इति विवरणमसङ्गतं स्यात्। अनेन हि विवरणेनेदमवगम्यते यत्सम्भाषणादिकमपि कलौ वर्ज्यमिति। यद्यपि "कलौ पतति कर्मणा" इति विवरणावसरगतं वाक्यजालं विरुद्धमिव प्रतिभाति, तथापि द्वादशाध्यायान्ते "आसनाच्छयनाद्यानात्सम्भाषात् सहभोजनात्। संक्रामन्तीह पापानि तैलबिन्दुरिवाम्भसि" इति पराशरवचनस्य तद्विवरणस्य च माधवाचार्यसम्बन्धिनस्तस्यानुसारेणाभ्यस्तसहासनादिपरत्वमेव तत्र विवक्षणीयमिति न विरोधः। अन्यथा—

"श्वपाकं चापि चण्डालं विप्रः सम्भाषते यदि।
द्विजसम्भाषणं कुर्यात्सावित्रीं च सकृज्जपेत्॥
चण्डालैः सह सुप्ते तु त्रिरात्रमुपवासयेत्।
चण्डालैकपथं गत्वा गायत्रीस्मरणाच्छुचिः॥
चण्डालदर्शने सद्य आदित्यमवलोकयेत्।
चण्डालस्पर्शने चैव सचैलं स्नानमाचरेत्॥
चाण्डालखातवापीषु पीत्वा सलिलमग्रजः।
अज्ञानादेकभक्तेन त्वहोरात्रेण शुध्यति॥
चण्डालभाण्डसंस्पृष्टं पीत्वा कूपगतं जलम्॥
गोमूत्रयावकाहारस्त्रिरात्राच्छुद्धिमाप्नुयात्॥
चण्डालघटसंस्थन्तु यत्तोयं पिबति द्विजः।
तत्क्षणात्क्षीयते तस्य प्राजापत्यं समाचरेत्॥
चरेत्सान्तपनं विप्रः प्राजापत्यमनन्तरम्।
तदर्धन्तु चरेद्वैश्यः पादं शूद्रस्तथा चरेत्॥
भाण्डस्थमन्त्यजानान्तु जलं दधि पयः पिबेत्।
ब्राह्मणः क्षत्रियो वैश्यः शूद्रश्चैव प्रमादतः॥

ब्रह्मकूर्चोपवासेन द्विजातीनान्तु निष्कृतिः ।
शूद्रस्य चोपवासेन तथा दानेन शक्तितः ॥
भुङ्क्तेऽज्ञानाद् द्विजश्रेष्ठश्चाण्डालान्नं कथञ्चन ।
गोमूत्रयावकाहारो दशरात्रेण शुध्यति ॥
अविज्ञातस्तु चण्डालो यत्र वेश्मनि तिष्ठति ।
विज्ञातरूपं चिन्त्यस्य द्विजाः कुर्युरनुग्रहम् ॥
चण्डालैः सह सम्पर्कं मासं मासार्धमेव च ।
गोमूत्रयावकाहारो मासार्धेन विशुध्यति ॥
गृहस्याभ्यन्तरं गच्छेच्चाण्डालो यदि कस्यचित् ।
तमगाराद्विनिःसार्य मृद्भाण्डं च परित्यजेत् ॥
श्वचण्डालोदक्याद्दृष्टश्च भोजनं परिवर्जयेत् ।
यो वै समाचरेद्विप्रः पतितादिष्वकामतः ॥
पञ्चाहं वा दशाहं वा द्वादशाहमथापि वा ।
मासार्धमेकमासं वा मासद्वयमथापि वा ॥
अब्दार्धमब्दमेकं वा भवेदूर्ध्वन्तु तत्समः ॥

इति पराशराचार्यैरेव चण्डालादिसम्भाषणादीनामपि कथं प्रायश्चित्तमुपवर्णितमुपपद्येत ?

तदयं निष्कर्षः—यत्कृतयुगादौ सद्यः सम्भाषणमात्रेणापि पातित्यम्, कलौ अभ्यस्तेन तेन पातित्यमिति । एतेन—एतैः सह समायोगं यः करोति दिने दिने । तुल्यतां याति सोऽप्याशु कलौ संवत्सरे गते—इति पाद्मवाक्यम्, "संवत्सरेण पतति पतितेन सहाचरन् । याजनाध्यापनाद्यौनाद् न तु यानासनाशनात्" ॥बोधा०॥ पतितैः सम्प्रयोगे च ब्राह्मेण यौनेन वा तेभ्यः सकाशान्मात्रोपलब्धास्तेषां परित्यागस्तैश्च न संवसेत् ॥ वसि० ॥ पञ्च महापातकान्याचक्षते गुरुतल्पं सुरापानं भ्रूणहत्या ब्राह्मणस्वन्यासापहरणं पतितसम्प्रयोगं च ब्राह्मेण यौनेन वा, अत्राप्युदाहरन्ति—संवत्सरेण

पतति पतितेन सहाचरन् । याजनाध्यापनाद्यौनान्न तु यानासनाशनात्—इति । ब्रह्मह-सुराप-गुरुतल्पग-मातृपितृयोनिसम्बन्धस्तेन-नास्तिक-निन्दितकर्माभ्यासि-पतितात्याग्यपतितत्यागिनः पातकसम्प्रयोजकास्तैः सार्कं समाचरन्'' इति गोतमः, "संवत्सरेण पतति संसर्गं कुरुते तु यः । यो हि शय्यासने नित्यं वसन् वै पतितो भवेत् । याजनं योनिसम्बन्धं तथैवाध्ययनं द्विजः । संवत्सरेण पतति सहाध्ययनमेव च'' इति उशनाः, इत्यादिवचनान्यपि—व्याख्यातानि ।

सर्वथा तु बहुस्मृतिसार्थक्यार्थं पराशरवाक्यानामेवोत्तरसन्दर्भगतानां सार्थक्यार्थञ्च कलौ युगेऽपि चाण्डालादिस्पर्शस्य दूषणत्वमूरीकर्तव्यमेव ।

वस्तुतस्तु कृते सम्भाषणादेवेति वाक्यं पतितसंसर्गविषयम्, न तु चण्डालादिसंसर्गविषयमिति नियतमूरीकर्तव्यम् । तथाच पतितसंसर्गेण पूर्वोक्तप्रकारेण संवत्सरपर्यन्तमभ्यस्तेनैव पातित्येऽपि चण्डालस्पर्शेन सकृत्कृतेनापि पातित्यमिति सिद्धान्तेऽपि न विरोधः । अत एव पराशरस्मृतावपि चण्डालसम्भाषणमपि निषिध्यमानमुपपद्यते । अत्र प्रसङ्गं इदमपि सूच्यते यत्—त्यजेद्देशं कृतयुगे त्रेतायां ग्राममुत्सृजेत् । द्वापरे कुलमेकन्तु कर्तारन्तु कलौ युगे—इति वचनस्य "कृते सम्भाषणादेव त्रेतायां स्पर्शनेन च । द्वापरे त्वन्नमादाय कलौ पतति कर्मणा'' इति वचनस्य च परस्परसम्बन्धोऽङ्गीकर्तव्यः । तदुक्तं विद्वन्मनोहराख्यायां पराशरस्मृतिव्याख्यायाम्—"एतेन—पूर्वोक्तेषु देशादित्यागेष्वेतानि निमित्तानि दर्शितानि । यथा कृते सम्भाषणमात्रात्पातित्यम्, तच्चैकदेशवासेऽवश्यम्भावीति देशत्यागः । त्रेतायां स्पर्शनेन, स चैकग्रामवासेऽवश्यम्भावीति ग्रामस्यैव त्यागः । द्वापरे त्वन्नभोजनेन, तच्चैककुलवासेऽवश्यम्भावीति कुलस्यैव त्यागः । कलौ तु कर्मणैवेति कर्तृमात्रत्यागः ।

तदुक्तं वृद्धपराशरेणापि—त्यजेद्देशं कृतयुगे त्रेतायां ग्राममुत्सृजेत्। द्वापरे कुलमेकन्तु कर्त्तारन्तु कलौ युगे। कृते सम्भाष्य पतति त्रेतायां स्पर्शनेन तु। द्वापरे भक्षणेऽन्नस्य कलौ पतति कर्मणा। इति।

एवं च यत्र सम्भाषणस्यापि निषेधस्तत्र देशत्याग इत्यादीनां विवक्षणं पराशराचार्यसम्मतमित्यूरीकर्त्तव्यमिति पराशराचार्यैरेव चण्डालसम्भाषणस्यापि निषेधाचण्डालदेशत्यागोऽपि पराशराचार्य-सम्मत इत्यवश्यमूरीकर्तव्यम्। अत्र च देशपदेन नगरं विवक्ष्यते। नगरलक्षणन्तु भृगुप्रोक्तमिदमेव। यत्—

"पण्यक्रयादिनिपुणैश्चातुर्वर्ण्यस्य संयुतम्।
अनेकजातिसम्बद्धं नैकशिल्पसमाकुलम्॥
सर्वदैवतसम्बद्धं नगरं त्वभिधीयते इति।
एतेन ग्रामलक्षणमपि व्याख्यातम्॥"
"विप्राश्च विप्रभृत्याश्च यत्र वै निवसन्ति ते।
स तु ग्राम इति प्रोक्तः शूद्राणां वास एव च" इति॥

तथाचेदं सिद्धं कलावपि नगरनिवासो न धर्मभीरूणां युक्त इति। यदि चावश्यं नगरनिवासोऽपि कर्तव्यः समापतति, एवमपि चण्डालादिभाषणं विनावस्थानन्तु नियतमेव। अत्र च प्रसङ्ग इदमपि सूच्यते—यन्नगरनिवासादिष्वपि स्पर्शदोषपरिहारार्थं चण्डालादीनामन्येषाञ्च कियद्दूरमन्तरं रथ्यादावपि रक्षणीयमिति। तदुक्तं पराशरस्मृतौ—

युगं युगद्वयं चैव त्रियुगञ्च चतुर्युगम्।
चण्डालसूतिकोदक्यापतितानामधः क्रमात्।
ततः सन्निधिमात्रेण सचेलं स्नानमाचरेत्॥
स्नात्वाऽवलोकयेत्सूर्यमज्ञानात्स्पृशते यदि" इति। अत्र विद्वन्मनोहराव्याख्या—"चण्डालादिस्पर्शनिर्णयस्य शेषमाह—युगे

युगे चेति। चण्डालादीनामधःक्रमात् प्रातिलोम्यक्रमेणैकद्वित्रिचतुर्युगमन्तरं स्पर्शनिवारणाय न्याय्यम्। तेनायमर्थः—पतितस्य व्यवधानमेकेन युगेन, उदक्याया युगद्वयेन, सूतिकाया युगत्रयेण, चाण्डालस्य युगचतुष्टयेन कार्यमिति। किञ्चोक्तव्यवधानाभावेन सन्निधिमात्रे स्पर्शाभावेऽपि सचेलं स्नानं कर्तव्यम्। अज्ञानतः स्पर्शे तु स्नानं सूर्यावलोकनञ्च। कामतः स्पर्शे तु च्यवनः—श्वानं श्वपाकं प्रेतधूमं देवद्रव्योपजीविनं ग्रामयाजकं सोमविक्रयिणं यूपं चितिं चितिकाष्ठं मद्यं मद्यभाण्डं सस्नेहं मानुषास्थि शवस्पर्शं महापातकिनं च कामतः स्पृष्ट्वा सचैलमम्भोऽवगाह्योत्तीर्याग्निमुपस्पृश्य गायत्र्यष्टशतं जपेत्, घृतं प्राश्य पुनः स्नात्वा त्रिराचामेदिति। एवमन्येषामस्पृश्यानां स्पर्शे स्नानम्, तत्स्पृष्टस्य स्पर्शे स्नानमतम्। तृतीयस्य श्रोत्रस्पर्श इत्याद्यवगन्तव्यम्। यद्यपि—चाण्डालस्पर्शने चैव सचैलं स्नानमाचरेत्—इति पष्ठेऽभिहितम्; तथाप्यज्ञानविषयतां तस्य स्पष्टयितुं पुनरत्रोपन्यासः। पूर्वोक्तव्यवधाने तु व्याघ्रपादः—"चण्डालं पतितं चैव दूरतः परिवर्जयेत्" इति। तदिदं सिद्धं यत्पाराशरस्मृतिपर्यालोचनेन सर्वथा चण्डालादिस्पर्शो दोषायैवेति।

अत्र वैद्यनाथदीक्षितसंमता आह्निककाण्डगता व्यवस्थेयमेव। सा यथा—चण्डालादीनां व्यवधाने देशपरिमाणमाह पराशरः—

युगं युगद्वयं चैव त्रियुगं च चतुर्युगम्।
चण्डालसूतिकोदक्यापतितानामधः क्रमात्॥
ततः सन्निधिमात्रेण सचेलं स्नानमाचरेत्।
स्नात्वाऽवलोकयेत् सूर्यमज्ञानात् स्पृशते यदि। इति।

अत्राङ्गस्पर्शे मज्जनसंख्यापि स्मर्यते—

वृषलं चान्त्यजातिं च चण्डालपतितं तथा।
आर्तवाभिप्लुतां नारीं स्पृष्ट्वा स्नानं समाचरेत्।

एकं च दशकं चैव द्वात्रिंशत् त्रिंशकं तथा ।
द्वात्रिंशच्च कमेणैव मज्जनं तु विधीयते ॥ इति स्मृत्यन्तरे ।
चण्डालस्य चतुष्षष्टिपदं श्रेण्याः शतद्वयम् ।
द्वात्रिंशदथवा तस्य मनः शुद्धिं समाचरेत् ॥
अस्पृश्यस्पर्शने चैव त्रयोदश निमज्जनम् ।
आचम्य प्रयतः पश्चात् स्नानं विधिवदाचरेत् ॥ इति व्यासः ।
सूतिकां पतितं तूदक्यां चण्डालं च चतुर्थकम् ।
यथाक्रमं परिहरेदेकद्वित्रिचतुर्युगमिति ।

अत्र व्यास-पराशरवचनयोर्विरोधे विकल्पो द्रष्टव्यः । यत्तु—

चण्डालं पतितं चैव दूरतः परिवर्जयेत् ।

गोवालव्यजनादूर्ध्वं सवासा जलमाविशेत् इति व्याघ्रपादवचनम् , तदिदं संकटविषयम् । यदाह संवर्तः—

संकटे विषमे चैव दुर्गे चैव विशेषतः ।
हट्टपत्तनमार्गे च यथासंभवमिष्यते ॥
तृणकाष्ठादिघातेन कुड्ये नान्तरिते तथा ।
गोवालव्यजने चापि स्नानं तत्र न विद्यते ॥ इति ।
यस्तु छायां श्वपाकस्य ब्राह्मणो ह्यधिरोहति ।
तत्र स्नानं प्रकुर्वीत घृतं प्राश्य विशुध्यति ॥
चण्डालपतितच्छायां स्पृष्ट्वा स्नानं समाचरेत् ।
चत्वारिंशत्पदादूर्ध्वं छायादोषो न विद्यते ॥ इति ।

दिवेकरशास्त्रिमहोदयादयस्तु चण्डालादिस्पर्शस्य दोषत्वमूरीकुर्वाणा अपि तद्दोषपरिहारार्थमाचमनमेव कर्तव्यम् , न तु स्नानादिकमिति यद्वदन्ति, तत्र तेषामुपष्टम्भकं वचनं स्मृतिचन्द्रिकायुद्धृतम्—

रजकश्चर्मकारश्च व्याधजालोपजीविनौ ।
निर्णेजकस्सनिकश्च नटशैलूषकास्तथा ॥

एतैर्येदङ्गं स्पृष्टं स्यात् शिरोवर्जं द्विजातिषु।
तोयेन क्षालनं कृत्वा आचान्तः प्रयतो मतः ॥

इति शातातपवचनमेव। इदं तु वचनं वैद्यनाथदीक्षितीयादि-पर्यालोचनेन द्वितीयादिस्पर्शविषयं गम्यते।

अनया हि व्यवस्थयेदमेवावगम्यते—यत् स्पर्शनिमित्ताचमविधिपराणां सर्वेषां चण्डालव्यतिरिक्तस्पर्शविषयत्वमेवाऽथवा कामकृतद्वितीयस्पर्शविषयत्वमेवेति। अस्तु कथमपि रजकश्चर्मकृच्चेति पूर्वोक्तवचनानुसारेण प्राथमिकरजकादिस्पर्शे शिरोवर्जं प्रक्षालनपूर्वकमाचमनमेव प्रायश्चित्तमिति, एवमपि अत्र शिरोग्रहणेन नाभेरूर्ध्वभागस्यैव ग्रहणात् नाभेरधोभागे तत्स्पर्शनिमित्तमाचमनविधान एव तात्पर्यमङ्गीकर्तव्यम्।

यत्तु पराशरस्मृतौ—

शिल्पिनः कारुका वैद्या दासीदासाश्च नापिताः।
राजानः श्रोत्रियाश्चैव सद्यःशौचाः प्रकीर्तिताः॥
सव्रतः सत्रपूतश्च आहिताग्निश्च यो द्विजः।
राज्ञश्च सूतकं नास्ति यस्य चेच्छति पार्थिवः॥
उद्यतो निधने दाने आर्तो विप्रो निमन्त्रितः।
तदैव ऋषिभिर्दृष्टं यथाकाले विशुध्यति॥

इत्यादिकमुपन्यस्तम्, तदिदं मृतसूतकादिविषयमेव; न चण्डालस्पर्शादिविषयम्। एतेन—विवाहोत्सवयज्ञेषु त्वन्तरा मृतसूतके। पूर्वसंकल्पितं द्रव्यं दीयमानं न दुष्यति—इति पराशरवचनमपि व्याख्यातम्॥

अत्र यथावसरमन्येषामपि स्मृतिकाराणां वचनानि चण्डालस्पर्शादिदूषणपराणि सङ्गृह्यन्ते। तानि यथा—याज्ञवल्क्यः—

विनायकः कर्मविघ्नसिद्ध्यर्थं विनियोजितः।

गणानामाधिपत्ये च रुद्रेण ब्रह्मणा तथा ॥
तेनोपसृष्टो यस्तस्य लक्षणानि निबोधत ॥
अन्त्यजैर्गर्दभैरुष्ट्रैः सहैकत्रावतिष्ठते ।
तेनोपसृष्टो लभते न राज्यं राजनन्दनः ॥

इत्यादि ॥ अत्र यद्यप्यन्त्यजैः साकमवस्थानं विघ्नोपसृष्ट-चिह्नतयैव निरूपितम्, तथापि तद्दुष्टमित्यत्र न तु विवादः ॥ एतेन शूद्रप्रेष्यं हीनसख्यं हीनयोनिनिषेवणम्—इत्यादिकमपि व्याख्यातम् । मनुः—

दिवाकीर्तिमुदक्यां च पतितं सूतकीं तथा ॥
शवं तत्स्पृष्टिनं चैव स्पृष्ट्वा स्नानेन शुध्यति ॥
चण्डालम्लेच्छसम्भाषे स्त्रीशूद्रोच्छिष्टभाषणे ।
उच्छिष्टं पुरुषं स्पृष्ट्वा भोज्यं चापि तथाविधम् ॥२२॥
चाण्डालकूपभाण्डेषु यदज्ञानाज्जलं पिबेत् ।
चरेत् सान्तपनं कृच्छ्रं ब्राह्मणः पापशोधनम् ॥४७॥
चण्डालेन च संस्पृष्टं पीत्वा वारि द्विजोत्तमः ।
त्रिरात्रेण विशुध्येत पञ्चगव्येन शुद्ध्यति ॥४७॥
दृष्ट्वा महापातकिनं चण्डालं वा रजस्वलाम् ।
प्रमादाद् भोजनं कृत्वा त्रिरात्रेण विशुध्यति ॥७३॥
वेदधर्मपरित्यागश्चण्डालस्य च भाषणम् ।
चान्द्रायणेन शुद्धिः स्यान्न ह्यन्या तस्य निष्कृतिः ॥
उच्छिष्टो यदि नाचान्तश्चण्डालादीन् स्पृशेद् द्विजः ।
उच्छिष्टस्तत्र कुर्वीत प्रजापत्यं विशुद्धये ॥७४॥
चण्डालसूतिकाशवान् तथा नारीं रजस्वलाम् ।
स्पृष्ट्वा स्नायाद्विशुध्यर्थं तत्स्पृष्टान् पतितांस्तथा ॥
चण्डालसूतिकाशवैः संस्पृष्टं स्पर्शयेत् यदि ।
प्रमादात्स्नात आचम्य जपं कृत्वा विशुध्यति ॥

अस्पृश्यस्पर्शनं कृत्वा स्नात्वा शुध्येद् द्विजोत्तमः ।
आचामेत विशुध्यर्थं प्राह देवः पितामहः ॥७७॥
चण्डालं तु शवं स्पृष्ट्वा चरेत् कृच्छ्रं द्विजोत्तमः ॥
दृष्ट्वा नभःस्थं नक्षत्रमहोरात्रेण शुध्यति ॥७९॥

पराशरमाधवीये—चण्डालश्वपचैः स्पृष्टो विण्मूत्रोच्छिष्ट एव च ।
त्रिरात्रेण विशुद्धः स्याद् भुक्तोच्छिष्टः षडाचरेत् ॥

अङ्गिराः—अन्त्यानामपि सिद्धान्नं भक्षयित्वा द्विजातयः ।
चान्द्रं कृच्छ्रं तदर्धं वा ब्रह्मक्षत्रविशां विदुः ॥अ०।१८।
रजकश्चर्मकारश्च नटो बुरुड एव च ।
कैवर्त-मेदभिल्लाश्च सप्तैते चान्त्यजाः स्मृताः ॥३॥
अन्त्यजानां गृहे तोयं भाण्डे पर्युषितं च यत् ।
प्रायश्चित्तं यदा पीतं तदेव हि समाचरेत् ॥ ४ ॥
चाण्डालकूपभाण्डेषु त्वज्ञानात्पिबते यदि ।
प्रायश्चित्तं कथं तेषां वर्णे वर्णे विधीयते ॥ ५ ॥
चरेत्सान्तपनं विप्रः प्राजापत्यन्तु भूमिपः ।
तदर्धन्तु चरेद्वैश्यः पदं शूद्रेषु दापयेत् ॥ ६ ॥
अज्ञानात्पिबते तोयं ब्राह्मणस्त्वन्त्यजातिषु ।
अहोरात्रोषितो भूत्वा पञ्चगव्येन शुध्यति ॥७ इति ॥

यमः—अस्तङ्गते यदा सूर्ये चण्डालरजकस्त्रियः ।
संस्पृष्टास्तु तदा कैश्चित्प्रायश्चित्तं कथं भवेत् ॥अ०११८॥
जातरूपं सुवर्णं च दिवानीतं च यज्जलम् ।
तेन स्नात्वा च पीत्वा च सर्वे ते शुचयः स्मृताः ॥१९॥
रजकश्चर्मकारश्च नटो बुरुड एव च ।
कैवर्तमेदभिल्लाश्च सप्तैते चान्त्यजाः स्मृताः ॥५४॥
एषां गत्वा तु योषां वै तप्तकृच्छ्रं समाचरेत् ॥५५॥

विप्रः स्पृष्टो निशायान्तु उदक्या पतितेन च ।
दिवानीतेन तोयेन गृहे स्नानं समाचरेत् ॥

अत्रिः—रजकः शैलुषश्चैव वेणुकर्मोपजीविनः ।
एतेषां यस्तु भुङ्क्ते वै द्विजश्चान्द्रायणं चरेत् ॥अ १६८॥
सर्वान्त्यजानां गमने भोजने सम्प्रवेशने ।
पराकेन विशुद्धिः स्याद्भगवानत्रिरब्रवीत् ॥ १६९ ॥
चण्डालभाण्डे यत्तोयं पीत्वा चैव द्विजोत्तमः ।
गोमूत्रयावकाहारः सप्तत्रिंशदहान्यपि । ।१७० ॥
'चण्डालं पतितं म्लेच्छं' मद्यभाण्डं रजस्वलाम् ।
द्विजः स्पृष्ट्वा न भुञ्जीत भुञ्जानो यदि संस्पृशेत् ॥
चर्मके रजके वैण्ये धीवरे नटके तथा ।
एतान् स्पृष्ट्वा द्विजो मोहादाचामेत्प्रयतोऽपि सन् ॥
एतैः स्पृष्टो द्विजो नित्यमेकरात्रं पयः पिबेत् ।
संस्पृष्टो यस्तु पक्वान्नमन्त्यजैर्वाऽप्युदक्यया ।
अज्ञानाद् ब्राह्मणोऽश्नीयात् प्राजापत्यार्धमाचरेत् ।१७१।
चण्डालान्नं यदा भुङ्क्ते चातुर्वर्ण्यस्य निष्कृतिः ।
चान्द्रायणं चरेद्विप्र क्षत्रः सान्तपनं चरेत् ॥ १७२ ॥
षड्रात्रमाचरेद्वैश्यः पञ्चगव्यं तथैव च ।
त्रिरात्रमाचरेच्छूद्रो दानं दत्वा विशुध्यति ॥ १७३ ॥
ब्राह्मणो वृक्षमारूढश्चण्डालो मूलसंस्पृशः ।
फलान्यत्ति स्थितस्तत्र प्रायश्चित्तं कथं भवेत् ॥ १७४ ॥
ब्राह्मणान् समनुज्ञाप्य सवासाः स्नानमाचरेत् ।
नक्तभोजी भवेद्विप्रो घृतं प्राश्य विशुध्यति ॥ १७५ ॥
एकवृक्षसमारूढश्चण्डालो ब्राह्मणस्तथा ।
फलान्यत्ति स्थितस्तत्र प्रायश्चित्तं कथं भवेत् ॥ १७६ ॥

ब्राह्मणान् समनुज्ञाप्य सवासाः स्नानमाचरेत् ।
अहोरात्रोषितो भूत्वा पञ्चगव्येन शुध्यति ॥ १७७ ॥
एकशाखासमारूढश्चण्डालो ब्राह्मणस्तथा ।
फलान्यत्ति स्थितं तत्र प्रायश्चित्तं कथं भवेत् ॥ १७८ ॥
त्रिरात्रोषितो भूत्वा पञ्चगव्येन शुध्यति ॥ १७९ ॥
चण्डालम्लेच्छश्वपचकपालव्रतधारिणः ।
अकामतः स्त्रियो गत्वा पराकेण विशुध्यति ॥ १८३ ॥
कामतस्तु प्रसूता वा तत्समो नात्र संशयः ।
स एव पुरुषस्तत्र गर्भो भूत्वा प्रजायते ॥ १८४ ॥
तैलाभ्यक्तो घृताभ्यक्तश्चण्डालं स्पृशते द्विजः ।
अहोरात्रोषितो भूत्वा पञ्चगव्येन शुध्यति ॥ १८५ ॥
चण्डालेन तु संस्पृष्टं यत्तोयं पिबति द्विजः ।
कृच्छ्रपादेन शुध्येत आपस्तम्बोऽब्रवीन्मनुः ॥ १८६ ॥
चण्डालस्य च संस्पर्शं विण्मूत्रस्पर्शनेव च ।

अन्त्यस्यात्पथिनोऽन्नं च तप्तकृच्छ्रमुदाहृतम् ।
चाण्डालान्नं द्विजो भुक्त्वा सम्यक् चान्द्रायणं चरेत् ॥
आदित्येऽस्तमिते रात्रौ स्पृशन्नीतं दिवाजलम् ।
तेनैव सर्वशुद्धिः स्याच्छवस्पृष्टन्तु वर्जयेत् ॥ २४५ ॥
पतितान्नं यदा भुक्तं भुक्तं चण्डालवेश्मनि ।
मासार्धन्तु पिबेद्वारि इति शातातपोऽब्रवीत् ॥ २३७ ॥
यश्चण्डालीं द्विजो गच्छेत् कथञ्चित्काममोहितः ।
त्रिभिः कृच्छ्रैर्विशुध्येत प्राजापत्यानुपूर्वशः ॥ २६० ॥
चण्डालं पतितं म्लेच्छं मद्यभाण्डं रजस्वलाम् ।
द्विजः स्पृष्ट्वा न भुञ्जीत भुञ्जानो यदि संस्पृशेत् ॥ २६२ ॥
अतः परं न भुञ्जीत त्यक्त्वाऽन्नं स्नानमाचरेत् ।
ब्राह्मणैस्समनुज्ञातस्त्रिरात्रमुपवासयेत् ।
सघृतं यावकं प्राश्य व्रतशेषं समापयेत् ॥ २६३ ॥
उदक्यां सूतिकां वापि अन्त्यजां स्पृशते यदि ।
त्रिरात्रेणैव शुद्धिः स्याद्विधिरेष सनातनः ॥ २६४ ॥
रजस्वला यदा स्पृष्टा श्वानचण्डालवायसैः ।
निराहारा भवेत्तावत्स्नात्वा कालेन शुध्यति ॥ २७३ ॥
चर्मको रजको वेणो धीवरो नटकस्तथा ।
एतान् स्पृष्ट्वा द्विजो नित्यमेकरात्रं पयः पिबेत् ॥२८२॥

संवर्तः—

चण्डालं पुल्कसं चैव श्वपाकं पतितं तथा ।
एतान् श्रेष्ठस्त्रियो गत्वा कुर्युश्चान्द्रायणत्रयम् ॥ १६८ ॥
चण्डालं पतितं दृष्ट्वा शवमन्त्यजमेव च ।
उदक्यां सूतिकां नारीं सवासाः स्नानमाचरेत् ॥
अस्पृश्यं स्पर्शयेद्यस्तु स्नानं तेन विधीयते ।
ऊर्ध्वमाचमनं प्रोक्तं द्रव्याणां प्रोक्षणं तथा ॥ १०८ ॥

चण्डालाद्यैश्च संस्पृष्ट उच्छिष्टश्च द्विजोत्तमः ।
गोमूत्रयावकाहारः षड्रात्रेण विशुध्यति ॥ १७० ॥
चण्डालभाण्डसंस्पृष्टं पीत्वा कूपगतं जलम् ।
गोमूत्रयावकाहारस्त्रिरात्रेण विशुध्यति ॥ १७३ ॥
अन्त्यजैः स्वीकृते तीर्थे तटाकेषु नदीषु च ।
शुध्यते पञ्चगव्येन पीत्वा तोयमकामतः ॥ १७५ ॥
चण्डालैः सङ्करे विप्रः श्वपाकैः पुल्कसैरपि ।
गोमूत्रयावकाहारो मासार्धेन विशुध्यति ॥१७६॥इति॥

शातातपः—

अस्पृश्यस्पर्शसङ्गी च वस्तुमाश्रित्य शास्त्रहृत् ।
पतितो मद्यविक्रेताऽनपत्यो द्विजवस्त्रहृत् ॥ १७ ॥
चितिवृक्षश्चितिर्यूपश्चण्डालो वेदविक्रयी ।
एतान् वै ब्राह्मणः स्पृष्ट्वा सचैलो जलमाविशेत् ।इति।

वृद्धशातातपः—

चण्डालं पतितं व्यङ्गमुन्मत्तं शवमन्त्यजम् ।
शृगालं सूतिकां नारीं रजसा च परिप्लुताम् ॥ २२ ॥
श्वकुक्कुटवराहांश्च ग्राम्यान् स्पृशति मानवः ।
सचैलं सशिरः स्नात्वा तदानीमेव शुध्यति ॥
अशुद्धः स्वयमप्येतानशुद्धांश्च यदा स्पृशेत् ।
विशुध्यत्युपवासेन शातातपवचो यथा ॥ इति ॥
पतितान्नं यदा भुङ्क्ते भुंक्ते चण्डालवेश्मनि ।
स मासार्धं चरेद्वारि मासं कामकृतेन तु ॥ ७० ॥
योगेन पतितेनैव स्पर्शे स्नानं विधीयते ।
तेनैवोच्छिष्टसंस्पृष्टः प्राजापत्यं समाचरेत् ॥ ७१ ॥
चण्डालोदकसंस्पर्शे स्नानं येन विधीयते ॥ ७२ ॥

चण्डालघटभाण्डस्थं यत्तोयं पिबते नरः ।
तत्क्षणात्क्षिपते यस्तु प्राजापत्यं समाचरेत् ॥ ७० ॥
शूद्रान्नरससम्पुष्टा ब्राह्मणाः पङ्क्तिदूषकाः ॥अ० १३।४॥
शूद्रान्नं ब्राह्मणो भुक्त्वा तथा रङ्गावतारिणः ।
चर्मकारस्य वेणस्य क्लीबस्य पतितस्य च ॥
रुक्मकारस्य तक्ष्णश्च तथा वार्धुषिकस्य च ॥
कदर्यस्य नृशंसस्य वेश्यायाः कितवस्य च ।
गणान्नं भूमिपालान्नमन्नं चैवाश्वजीविनः ॥ ३८ ॥
सौनिकान्नं सूतिकान्नं भुक्त्वा मासं व्रतं चरेत् ।इत्यादि ।

गौतमः—

पतितचण्डालसूतिकोदक्याशवस्पृष्टितत्स्पृष्टयुपस्पर्शने सचैलोदकोपस्पर्शनाच्छुध्येत ॥ श्वपचचण्डालपतितावेक्षणे शुध्यम् ॥ अ० १४ । १९ ॥

न म्लेच्छाशुच्यधार्मिकैः सम्भाषेत । सम्भाष्य पुण्यकृतो मनसा ध्यायेत्, ब्राह्मणेन वा सह सम्भाषेत ।

बोधायनः—चैत्यवृक्षं चितिं यूपं चण्डालं वेदविक्रयम् ।
एतानि ब्राह्मणः स्पृष्ट्वा सचेलो जलमाविशेत् ॥

आपस्तम्बः—प्रपास्वरण्ये च जलेऽथ तीरे द्रोण्यां जलं यच्च चितिः सुतम्भवेत् । श्वपाकचण्डालपरिग्रहेतु पीत्वा जलं पञ्चगव्येन शुद्धिः ॥

चण्डालकूपभाण्डेषु योऽज्ञानात् पिबते जलम् ।
प्रायश्चित्तं कथं तस्य वर्णे वर्णे विधीयते ॥ अ० ४। १
चरेत्सान्तपनं विप्रः प्राजापत्यन्तु भूमिपः ।
तदर्धन्तु चरेद्वैश्यः पादं शूद्रस्य दापयेत् ॥ २ ॥
भुक्तोच्छिष्टस्त्वनाचान्तश्चण्डालैः श्वपचेन वा ।
प्रमादात्स्पर्शनं गच्छेत्तत्र कुर्याद्विशोधनम् ॥ ३ ॥

चण्डालेन यदा स्पृष्टो विण्मूत्रे च कृते द्विजः ।
प्रायश्चित्तं त्रिरात्रं स्याद्भुक्तोच्छिष्टः षडाचरेत् ॥ ४ ॥
वृक्षारूढे तु चण्डाले द्विजस्तत्रैव तिष्ठति ॥
फलानि भक्षयेत्तस्य कथं शुद्धिं विनिर्दिशेत् ॥ १० ॥
ब्राह्मणान् समनुज्ञाप्य सवासाः स्नानमाचरेत् ।
एकरात्रोषितो भूत्वा पञ्चगव्येन शुध्यति ॥ ७७ ॥
चण्डालेन यदा स्पृष्टो द्विजवर्णः कदाचन ।
अनभ्युक्ष्य पिबेत्तोयं प्रायश्चित्तं कथं भवेत् ॥ अ० ५
अन्त्यजातिश्वपाकेन संस्पृष्टा वै रजस्वला ।
अहानि तान्यतिक्रम्य प्रायश्चित्तं प्रकल्पयेत् ॥
शूद्रान्नं शूद्रसम्पर्कं शूद्रेणैव सहासनम् ।
शूद्राज्ज्ञानागमः कश्चिज्ज्वलन्तमपि पातयेत् ।८।८।
रजकव्याधशैलूषवेणुकर्मोपजीविनाम् ।
भुक्त्वैषां ब्राह्मणश्चान्नं शुद्धिं चान्द्रायणेन तु ॥ ९ ॥
भुक्तोच्छिष्टस्त्वनाचान्तश्चण्डालैः श्वपचेन वा ।
प्रमादाद्यदि संस्पृष्टो ब्राह्मणो ज्ञानदुर्बलः ॥ ३८ ॥
स्नात्वा त्रिषवणं नित्यं ब्रह्मचारी धराशयः ।
स त्रिरात्रोषितो भूत्वा पञ्चगव्येन शुध्यति ॥ ३९ ॥
चण्डालेन तु संस्पृष्टो यद्यपः पिबति द्विजः ।
अहोरात्रोषितो भूत्वा त्रिषवणेन शुध्यति ॥ ४० ॥

वसिष्ठः—एतदेव चण्डालपतितान्नभक्षणेषु । ततः पुनरुपनयनं वपनादीनान्तु निवृत्तिः ।

परशरमा०—पृ० ३९—पतितचण्डालारावश्रवणे त्रिरात्रं वाग्यता अनश्नन्त आसीरन् ॥

स्मृत्यन्तरे वीरमित्रोदये—

चण्डालान्नं द्विजो भुक्त्वा सम्यक् चान्द्रायणं चरेत् ।
बुद्धिपूर्वं तु कृच्छ्राब्दं पुनः संस्कारमर्हति ॥

पराशरः—श्वचाण्डालोदक्याद्दष्टश्च भोजनं परिवर्जयेत् । अ० ९६६

चैत्यवृक्षश्चितिर्यूपश्चण्डालः सोमविक्रयी ।
एतांस्तु ब्राह्मणः स्पृष्ट्वा सवासा जलमाविशेत् ॥

हारीतः—चण्डालैः सह सम्भाष्य द्विजसम्भाषणाच्छुचिः ।

सावित्रीं व्याहरन् वापि ... ...
उच्छिष्टैः सह सम्भाषेत् त्रिरात्रेण विशुध्यति ।
चण्डालानां प्रमादेन यदि भुञ्जीत द्विजः ॥
ततश्चान्द्रायणं कुर्यान्मासमेकं व्रतं चरेत् ।
शूद्रो वाप्यर्धमासं वै भुक्त्वा चैव जितेन्द्रियः ॥
त्रिरात्रमुपवासं च ब्राह्मणांस्तर्पयेच्छुचिः ।
चण्डालैः सह संवासे दीर्घकालमकामिकम् ॥
विज्ञानान्मृण्मयं पात्रं सर्वं त्यजति तद्गृहात् ।
पालकृच्छ्रं ततः कुर्यात्सप्तकृच्छ्रं तथैव च ॥
ब्राह्मणांस्तर्पयेत्पश्चाद् ब्रह्मकूर्चेन शुध्यति ॥
गृहस्याभ्यन्तरे यस्य चण्डालो यदि गच्छति ।
पार्थिवानां परित्यागः सर्वेषां सद्य एव हि ॥
अनघरसभाण्डानां ग्रहणं मन्यते तथा ।
अजस्य गोः प्रवेशाद्धि शुध्यते नात्र संशयः ॥ इति ॥

देवलः— श्वपाकं पतितं व्रात्यमुन्मत्तं शवदाहकम् ।
सूतकं सूतिकां नारीं रजसा च परिप्लुताम् ॥
श्वकुक्कुटवराहांश्च ग्राम्यान् संस्पृश्य मानवः ।
सचैलः सशिरः स्नात्वा तदानीमेव शुध्यति ॥

चण्डालाद्युषितं यत्र यत्र विष्ठादिसङ्कृतिः ।
एवं कश्मलभूयिष्ठा भूरमेध्या प्रकीर्तिता ॥
सभायां स्पर्शने चैव म्लेच्छेन सह संविशेत् ।
कुर्यात्स्नानं सचैलन्तु दिनमेकमभोजनम् ॥

च्यवनः—चण्डालसङ्करे स्वभवने दहनं सर्वभाण्डभेदनम्, दारवाणां तु तक्षणम्, शङ्खशुक्तिसुवर्णरजतचैलानामद्भिः शुद्धिः प्रक्षालनम्, कांस्यपात्रणामाकरे शुद्धिः, सौवीरपयोदधितक्राणां परित्यागः अपरित्यागे गोमूत्रयावकाहारो मासं क्षपयेत् । बालवृद्धस्त्रीणामर्धं प्रायश्चित्तम् आषोडशाद् बालः, सप्तत्यूर्ध्वं वृद्धः । चीर्णे प्रायश्चित्ते ब्राह्मणभोजनं गोदानं दद्यात्, अभावे सर्वस्वमिति । बालस्पर्शं भुञ्जीतेत्यादि ॥

व्याघ्रः—अस्पृश्यस्पर्शनं कृत्वा यदा भुङ्क्ते गृहाश्रमी ।
अकामतस्त्रिरात्रं स्यात्षड्रात्रं कामतश्चरेत् ॥

बृहस्पतिः—अस्नात्वा तु यदा भुङ्क्ते पिण्डं दत्वा पितुर्मृतौ ।
स्पृष्ट्वा शावमुदक्यां वा चण्डालं सूतिकां तथा ॥
अकामतस्त्रिरात्रं स्याद् बुद्ध्या सान्तपनं चरेत् ।

मार्कण्डेयः—अपाङ्क्तेयस्य यः कश्चित्पङ्क्तौ भुङ्क्ते द्विजोत्तमः ।
अहोरात्रोषितो भूत्वा पञ्चगव्येन शुध्यति ॥

षट्त्रिंशन्मतसङ्ग्रहे—चण्डाल श्वोष्ट्रायकाशे श्रुतिस्मृतिपाठे एकरात्रमभोजनम् ॥

बाधकानि तु वचनान्येतान्येव भवितुमर्हन्ति । तानि यथा—

अत्रिः—गोदोहने चर्मपुटे च तोयं यन्त्राकरे कारुकशिल्पहस्ते ।
स्त्रीबालवृद्धाचरितानि यान्यप्रत्यक्षदृष्टानि शुचीनि तानि ।
प्राकाररोधे विषमप्रदेशे सेनानिवेशे भवनस्य दाहे ।
अवाप्तयज्ञेषु महोत्सवेषु तेष्वेव दोषा न विकल्पनीयाः ॥
प्रपास्वरण्ये घटस्थस्य कूपे द्रोण्यां जलं कोशविनिर्गतञ्च ।

देवयात्राविवाहेषु यज्ञप्रकरणेषु च ॥
उत्सवेषु च सर्वेषु स्पृष्टास्पृष्टिर्न विद्यते ॥

इत्यादीनि। अत्र प्रथमस्य श्लोकद्वयस्य "श्वपाकचाण्डाल-परिग्रहे तु पीत्वा जलं पञ्चगव्येन शुद्धिः" इत्युत्तरवाक्याचण्डालस्पर्शातिरिक्तविषयत्वमिति स्पष्टं ज्ञायते। एतेन—स्मृत्यन्तरगतानि—

तीर्थे विवाहे यात्रायां सङ्ग्रामे राष्ट्रविप्लवे।
आपद्यपि च कष्टायां स्पृष्टास्पृष्टिर्न विद्यते—

इत्यादीनि वचनान्यपि—व्याख्यातानि; तस्य सर्वस्यापि सूतकाशौचिस्पर्शविषयत्वस्य निबन्धकारैर्व्यवस्थापितत्वात्। अतएव—

प्रपास्वरण्ये घटकस्य कूपे द्रोण्यां जलंकोश विनिः सृतं च
श्वपाकचण्डालपरिग्रहेतु पीत्वा जलं पञ्चगव्येन शुद्धिः" ॥

इत्यापस्तम्बस्मृतिवचनमुपपद्यते। एतेन—"शिल्पिनः कारुका वैद्या दासी दासाश्च नापिताः। राजानो राजभृत्याश्च सद्यःशौचाः प्रकीर्तिताः ॥ सव्रतः सत्रपूतश्चाहिताग्निश्चैव यो द्विजः। राज्ञश्च सूतकं नास्ति यस्य चेच्छति पार्थिवः। उद्यतो निधने दान आर्तो विप्रो निमन्त्रितः। तदैव ऋषिभिर्दिष्टं यथा कालेन शुद्ध्यति"—इत्यादिवचनान्यपि व्याख्यातानि॥ एषु हि स्पष्टमेवाशौचस्यैव विवाहादावदोषत्वमुक्तम्, नान्त्यजस्पर्शस्य। यत्त्वत्र नापितस्यापि सद्यःशौचत्वं प्रतिपादितम्, तत्तस्य न जातिकृतस्पर्शदोषत्वनिराकरणपरम्, किन्तु तस्याशौचकृतस्पर्शदोषनिराकरणपरम्। अत एव खलु राजश्रोत्रियादिसाहचर्यमत्र श्रूयमाणमुपपद्यते। अत एव हि माधवीय उक्तश्लोकव्याख्यावसरे—

दाने विवाहे यज्ञे च संग्रामे राष्ट्रविप्लवे।
आपद्यपि च कष्टायां सद्यः शौचं विधीयते ॥ इति ॥

याज्ञवल्क्यवचनम् ( ३।२८।२९ ),

"संग्रामस्थश्च राजन्यो वैश्यो मध्यं गवां स्थितः॥" इति॥ हारीतवचनम्॥

विवाह-यज्ञ-दुर्गेषु यात्रायां तीर्थकर्मणि।
न तत्र सूतकं तद्वत्कर्म यज्ञादि कारयेत्॥" इति पैठीनसिवचनम्,

अथ देवप्रतिष्ठायां गणयागादिकर्मणि।
श्राद्धादौ पितृयज्ञे च कन्यादाने च नो भवेत्॥" इत्यङ्गिरोवचनम्,

राज्यनाशस्तु येन स्यात्तेन राज्ञा स्वमण्डले।
प्रपाल्यनष्ट संग्रामे होमे प्रास्थानिके सति॥
मन्त्रादितर्पणैर्वापि प्रजानां शान्तिकर्मणि।
गोमङ्गलादौ वैश्यानां कृषिकालात्ययेऽप्यपि॥
आशौचं न भवेल्लोके सर्वत्रान्यत्र विद्यते॥

इति ब्रह्मपुराणवचनं चोपोद्बलकतया निर्दिष्टमुपपद्यते। अनेन हि पराशरमाधवीयग्रन्थेन स्पष्टमिदं सूच्यते—यत्रातिकृत-स्पर्शास्पर्शविषयं न—"तीर्थे विवाहे यात्रायां संग्रामे राष्ट्रविप्लवे। आपद्यपि च कष्टायां स्पर्शास्पर्शौ न विद्यते—इत्यादि पद्यजातमिति।

अत्र स्मृतिचन्द्रिकागतं नैमित्तिकस्नानप्रकरणमपि नासंप्रत्योग्यम्। तद्यथा—

अथ नैमित्तिकस्नानानि। तत्र मनुः—

दिवाकीर्तिमुदक्यां च पतितं सूतिकां तथा।
शवं तत्स्पृष्टिनं चैव स्पृष्ट्वा स्नानेन शुद्ध्यति॥

दिवाकीर्तिश्चण्डालः। उदक्या रजस्वला। स्नानेन सचैलेनेति शेषः;

शावस्पृष्टिमथोदक्यां सूतिकां पतितं तथा।
स्पृष्ट्वा स्नानेन शुद्धस्त्याः सचैलेन न संशयः॥

इत्यङ्गिरःस्मरणात्। तत्र तच्छब्देन दिवाकीर्त्यादिशवपर्यन्तानां ग्रहणम्, न शवमात्रस्य; तेषामप्यशुचित्वेन शवतुल्यत्वादेकवाक्योपादानाच। न चात्रानन्तर्याच्छव एव तत्स्पृष्टिन्याय इति शङ्कनीयम्, यद् आह गौतमः—

'पतितचण्डालसूतिकोदक्याशवस्पृष्टितत्स्पृष्ट्युपस्पर्शने सचेलोदकोपस्पर्शनाच्छुद्ध्येत्—इति।

अनेन पतितादिस्पृष्टिमारभ्य तृतीयस्यापि सचेलं स्नानमित्युक्तं भवति। न चात्रापि पतितादुदक्यान्तानां शवस्पृष्टिनां सम्बन्ध इति तत्रैव तत्स्पृष्टन्याय इति शङ्कनीयम्, चण्डालादिष्वपि स्मृत्यन्तरे तत्स्पृष्टिन्यायाभिधानात्—

'शवचण्डालपतितसूतकोदक्यातत्स्पृष्टिस्पर्शने स्नानम्, इति। सङ्ग्रहकारोऽपि—

चण्डालसूतिकोदक्यापतितास्तथाय एव च।
एतेषामेव संस्पर्शे तत्स्पृष्टिन्याय इष्यते॥ इति।
एवकारः कटधूमादिस्पृष्टिन्यायनिवृत्त्यर्थः।

तदाह—स एव—

कटधूमस्पृशं वान्तं विरिक्तं क्षुरकर्मिणम्।
मैथुनाचरितारं च स्पृष्ट्वा स्नानेन शुध्यते॥ इति।

यत्तु संवर्तेन—

तत्स्पृष्टिनं स्पृशेद्यस्तु स्नानं तस्य विधीयते।
ऊर्ध्वमाचमनं प्रोक्तं द्रव्याणां प्रोक्षणं तथा॥

इति द्वयोरेव स्नानमुक्तम्, तदबुद्धिपूर्वकस्पर्शनविषयम्।

तथाच सङ्ग्रहकारः—

अबुद्धिपूर्वकस्पर्शे द्वयोः स्नानं विधीयते।
त्रयाणां बुद्धिपूर्वे तु तत्स्पृष्टिन्यायकल्पना॥ इति।

चतुर्थस्य त्वाचमनमेव—

उपस्पृशेच्चतुर्थस्तु तदूर्ध्वं प्रोक्षणं स्मृतम्। इति मरीचिस्मरणात्। यत्तु कूर्मपुराणे—

चण्डालसूतिकोदक्या संस्पृष्टं संस्पृशेद्यदि।
प्रमादात्तत आचम्य जपं कुर्यात्समाहितः॥
तत्स्पृष्टस्पृष्टिनं स्पृष्ट्वा बुद्धिपूर्वं द्विजोत्तमः।
आचामेत्तद्विशुद्ध्यर्थं प्राह देवः पितामहः॥

इति, तदुभयं द्वितीयादिविषयम्, अन्यथा गौतमादिवचनविरोधात्। अनेनैवाभिप्रायेण याज्ञवल्क्योऽपि—

उदक्याशुचिभिस्स्नायात्संस्पृष्टस्तैरुपस्पृशेत्।
अब्लिङ्गानि जपेच्चैव गायत्रीं मनसा सकृत्॥

इति। उदक्याशुचिभिश्चण्डालपतिताद्यैस्संस्पृष्टस्स्नायात्। तैरुदक्याभिस्स्पृष्टैस्स्पृष्ट उपस्पृशेत आचामेदित्यर्थः। भाष्यकारैस्तु दण्डादिस्पर्शविषयमित्येतद्व्याख्यातम्। यद्वा तैरुदक्यादिभिस्स्पृष्टैस्स्पृष्ट उपस्पृशेत् स्नायादिति संवर्तवचनेन समानार्थम्। यदपि देवलेनोक्तम्—

संस्पृश्याशुचिसंस्पृष्टं द्वितीयं चापि मानवः।
हस्तौ पादौ च तोयेन प्रक्षल्याचम्य शुद्ध्यति॥

इति, तदपि याज्ञवल्क्येन समानार्थम्। यदपि वृद्धशातातपेन—

अशुचिं संस्पृशेदन्यमेक एव स दुष्यति।
तत्स्पृष्टोऽन्यो न दुष्येत सर्वद्रव्येष्वयं विधिः॥

इति, तदपि तेनैव समानार्थम्। यदप्यादित्यपुराणे—

ससूतकं समृतकं प्रसूतां वा रजस्वलाम्।
स्पृष्ट्वा स्नायात्तु तत्स्पृष्टसंस्पर्शादाचमेद् बुधः॥

इति, तदपि संवर्तवचनेन समानार्थम्। अत्र कात्यायनः—

चण्डालसूतिकोदक्यापतिताशौचकृच्छ्रवान् ।
स्पृष्ट्वा स्नात्वा शुचिः प्रेतमनुगम्यानलं स्पृशेत् ॥

इति, एतत्प्रमादसंस्पर्शविषयम् ।

पतितं सूतिकामन्त्यं शवं स्पृष्ट्वा च कामतः ।
स्नात्वा सचेलं स्पृष्ट्वाऽग्निं घृतं प्राश्य विशुध्यति ।

इति स्मरणात् । अत्र प्रचेताः—

यत्रान्तरितसंस्पर्शस्साक्षात्स्पर्शोऽभिधीयते ।
साक्षात्स्पर्शे तु यत्प्रोक्तं तदन्तरितेऽपि च ॥

इति । व्यासोऽपि—

चण्डालपतितौ दृष्ट्वा नरः पश्येत भास्करम् ।
स्नात्वा स्वैतौ समालोक्य सचेलं स्नानमर्हति ॥
सूतिकापतितोदक्याचण्डालं च चतुर्थम् ।
यथाक्रमं परिहरेदेक-द्वि-त्रिचतुर्युगम् ॥

वैयाघ्रपादोऽपि—

चण्डालं पतितं चैव दूरतः परिवर्जयेत् ।
गोबालव्यजनादर्वाक्सवासा जलमाविशेत् ॥

इति । एतदतिसङ्कटस्थानविषयमिति कैश्चित् व्याख्यातम् ।

विष्णुरपि—

चण्डालोदक्यासंस्पर्शे स्नानं कृत्वा विशुद्ध्यति ।

इति । पराशरोऽपि—

चैत्यवृक्षश्चितिर्यूपश्चण्डालस्सोमविक्रयी ।
एतांस्तु ब्राह्मणः स्पृष्ट्वा सचेलो जलमाविशेत् ॥

इति । चितिप्रदेशारोपितवृक्षः चैत्यवृक्षः । अङ्गिरा अपि—

यस्तु छायां श्वपाकस्य ब्राह्मणो ह्यधिरोहति ।
तत्र स्नानं प्रकुर्वीत घृतं प्राश्य विशुद्ध्यति ॥

आपस्तम्बोऽपि—

एकशाखां समारूढश्चण्डालादिर्यदा भवेत् ।
ब्राह्मणस्तत्र निवसन् स्नानेन शुचितामियात् ॥

इति । शाखाग्रहणमेवंजातीयकद्रव्योपलक्षणार्थम् ।

अत्र सङ्ग्रहकारः—

तार्णे संस्तर एकस्मिन् अस्पृश्यैस्सह तिष्ठति ।
अस्पृश्यैस्तैरदृष्टोऽस्मीत्येवं मूढस्तु मन्यते ॥

इति । तार्णे तृणनिर्मिते ।

मार्कण्डेयपुराणेऽपि—

अभोज्यसूतिकाषण्ढमार्जाराखुश्वकुक्कुटम् ।
पतितापविद्धचण्डालमृतहारांश्च धर्मवित् ॥
संस्पृश्य शुद्ध्यति स्नानात्तोदक्याग्रामसूकरौ ।
तद्वच्च सूतिकाशौचदूषितापुरुषावपि ॥

षट्त्रिंशन्मते—

बौद्धान् पाशुपताञ्जैनान्लोकायतिककापिलान् ।
विकर्मस्थान् द्विजान् स्पृष्ट्वा सचेलो जलमाविशेत् ॥
कापालिकांस्तु संस्पृश्य प्राणायामोऽधिको मतः ।

ब्रह्माण्डपुराणेऽपि—

शैवान् पाशुपतान् स्पृष्ट्वा लोकायतिकनास्तिकान् ।
विकर्मस्थान् द्विजान् शूद्रान्सवासा जलमाविशेत् ॥

संवर्तोऽपि—

शूद्रोच्छिष्टं द्विजः स्पृष्ट्वा उच्छिष्टं शूद्रमेव वा ।
शुचिमप्यवगृह्यैनं सवासा जलमाविशेत् ॥

अवगृह्य स्पृष्ट्वेत्यर्थः । स्मृत्यन्तरेऽपि—

चितिं च चितिकाष्ठं च यूपं चण्डालमेव च ।
स्पृष्ट्वा देवलकं चैव सवासा जलमाविशेत् ॥

देवार्चनपरो विप्रो वित्तार्थी वत्सरत्रयम् ।
स वै देवलको नाम हव्यकव्येषु गर्हितः ॥

यमोऽपि—

शुना चैव श्वपाकेन मृतनिर्हरणेन वा ।
स्पृष्टमात्रस्तु कुर्वीत सचेलं स्नावनं जले ॥

इति । शुनि विशेषमाहापस्तम्बः—

"शुनोपहतस्सचेलोऽवगाहेत । प्रक्षाल्य वा तं देशमग्निना संस्पृश्य पुनः प्रक्षाल्य पादौ चाचम्य प्रयतो भवति ।"

इति । सचेलावगाहनं नाभेरूर्ध्वाङ्गस्पर्शनविषयम् । तथाच विष्णुः-

नाभेरधः कराग्रं वा शुना यद्युपहन्यते ।
प्रक्षाल्य दर्भैस्संज्वाल्य पुनराचम्य शुध्यति ॥
नाभेरूर्ध्वं शुना स्पृष्टो लिप्तोऽमेध्येन वा पुनः ।
प्रक्षाल्य मृद्भिरङ्गानि सचेलं स्नानमर्हति ॥

इति । एवं रजकादिस्पर्शने वेदितव्यम् । तथाच शातातपः

रजकश्चर्मकृच्चैव व्याधजालोपजीविनौ ।
निर्णेजकस्सौनिकश्च नटश्शैलूषकस्तथा ।
मुखेभगस्तथा श्वा च वनितास्सर्ववर्णगाः ॥
चक्री ध्वजी वध्यघाती ग्रामकुक्कुटसूकरौ ।
एतैर्यदङ्गं स्पृष्टं स्याच्छिरोवर्जं द्विजातिषु ।
तोयेन क्षालनं कृत्वा आचान्ताः प्रयता मताः ॥

रजको वस्त्रादिरागकर्ता निर्णेजकश्चेलधावकः । सौनिको हिंस्रः । नटो जातिविशेषः । अनटोऽपि रङ्गावतरणजीवी शैलूषकः । मुखेभगः षण्ढविशेषः । ध्वजी मद्यविक्रेता । अत्रापि श्वसाहचर्याच्छिरोग्रहणं नाभेरूर्ध्वाङ्गोपलक्षणार्थम् । शङ्खोऽपि—

रथ्याकर्दमतोयेन ष्ठीवनाद्येन वा तथा ।
नाभेरूर्ध्वं नरस्स्पृष्ट्वा सद्यस्स्नानेन । शुद्ध्यति ।

जातूकर्णोऽपि—

ऊर्ध्वं नाभेः करौ मुक्त्वा यदङ्गं स्पृशते खगः ।
स्नानं तत्र प्रकुर्वीत शेषं प्रक्षाल्य शुद्ध्यति ॥

खगः पक्षी । यदि पुनरशुद्ध एव श्वादीन् स्पृशति, तदा विशेषो देवलेन दर्शितः—

श्वपाकं पतितं व्यङ्गमुन्मत्तं शवदाहकम् ।
सूतिकां साविकां नारीं रजसा च परिप्लुताम् ॥
शुक्कुक्कुटवाराहान्ग्राम्यान् संस्पृश्य मानवः ।
सचेलस्सशिरास्स्नात्वा तदानीमेव शुद्ध्यति ॥
अशुद्धान्स्वयमप्येतानशुद्धस्तु यदि स्पृशेत् ।
विशुद्ध्यत्युपवासेन तथा कृच्छ्रेण वा पुनः

इति । साविका प्रसवस्य कारयित्री । एतद्बुद्धिपूर्वक स्पर्शविषयम् । तथाच कूर्मपुराणम्—

उच्छिष्टोऽद्भिरनाचान्तश्चण्डालं वा स्पृशेद् द्विजः ।
प्रमादाद्वा जपेत्स्नात्वा गायत्र्यष्टसहस्रकम् ॥
चण्डालपतितादींस्तु कामाद्यस्संस्पृशेद् द्विजः ।
उच्छिष्टस्तत्र कुर्वीत प्राजापत्यं विशुद्धये ।

इति । अनेनैवाभिप्रायेण विष्णुरपि—

अनुच्छिष्टेन संस्पृष्टे स्नानं येन विधीयते ।
तेनैवोच्छिष्टसंस्पृष्टः प्राजापत्येन शुद्ध्यति ॥

अत्र संवर्तः—

नीलीं नीलीविकारांश्च मानुष्यास्थ्यपि वा द्विजाः ।
चण्डालपतितच्छायां स्पृष्ट्वा स्नानं समाचरेत् ॥

अत्र शातातपः

ग्रामे तु यत्र संस्पृष्टिर्यात्रायां कलहादिषु ।
ग्रामसंदूषणे चैव स्पृष्टिदोषो न विद्यते ॥

ग्रामे राजमार्गादौ। षट्त्रिंशन्मतेऽपि—

देवयात्राविवाहेषु यज्ञेषु प्रकृतेषु च।
उत्सवेषु च सर्वेषु स्पृष्टास्पृष्टिर्न विद्यते।

बृहस्पतिरपि—

तीर्थे विवाहे यात्रायां सङ्ग्रामे देशविप्लवे।
नगरग्रामदाहे च स्पृष्टास्पृष्टिर्न दुष्यति॥

एतच्च वाक्यत्रयं यत्राहमनेन स्पृष्ट इति ज्ञानं नास्ति, तद्विषयमिति केचित्। उच्छिष्टाशुचिस्पर्शनविषयमित्यन्ये। तत्रापस्तम्बः—

'शक्तिविषये न मुहूर्तमप्यप्रयतः स्यात्' इति।

तदत्रावसरे माधवाचार्याणामाशयसंकलनं नियतं कर्तव्यमिति तदेव कर्तुं प्रयतामहे। माधवाचार्या हि 'कलौ पाराशराः स्मृताः' इति वचनस्य प्रायश्चित्तविषयत्वं मन्वानाः कलौ युगे मरणान्तप्रायश्चित्तं निवारयन्तोऽपि कृतप्रायश्चित्तानामपि पतितानां व्यवहारायोग्यत्वमेव मन्यन्ते। मरणान्तप्रायश्चित्तपक्षे हि आमरणं स्वकर्माधिकारोऽपि नास्ति, साधारणसंसर्गयोग्यताऽपि नास्तीति हि सर्वसम्मतमिदम्। अत्र तु पतितानां कृतप्रायश्चित्तानां स्वजीवनकाले यथेच्छमेव स्वकर्माधिकारो आविमत्यवायपरिहारसामर्थ्यम्, साधारणव्यवहारयोग्यता च वर्तत इति कृतः संकोचः पराशराचार्यैरिति न दोषः। नहि मरणान्तप्रायश्चित्तस्य निषेधमात्रेण कृतप्रायश्चित्तानां सर्वथा व्यवहार्यत्वमपि प्रायश्चित्तेन भवतीति कल्पनं सम्भवति। सर्वथा तु पतितत्वे पतिततुल्यत्वे वा चण्डालादिसंसर्गिणां कृतप्रायश्चित्तानामप्यसंव्यवहार्यत्वमित्येवोरीकर्तव्यम्, न तु व्यवहार्यत्वमपि। तेषां स्वधर्मानुष्ठानं च परस्परं याजकत्वादिस्वीकारेणैव सम्भवति। व्यवस्थापितं चैवं बौधायनधर्मसूत्रे आपस्तम्बधर्मसूत्रे च—"अथ पतिताः समवसाय धर्मांश्चरे-

युरितरेतरयाजका इतरेतराध्यापका मिथो विवहमानाः'' इत्यादिना। माधवाचार्या अपि हि पतितसंसर्गस्य प्रकीर्णकत्वम्—'यो वै समाचरेद्विप्रः पतितादिष्वकामतः। पञ्चाहं वा दशाहं वा द्वादशाहमथापि वा। अब्दार्धमब्दमेकं वा तदूर्ध्वं चैव तत्समः'' इति श्लोकोक्तस्य किञ्चिदूनाब्दपर्यन्तस्यैवाभिप्रयन्ति, न तदधिकस्य। अत एव—'तदूर्ध्वं चैव तत्समः' इत्यभिधानात् पूर्वत्र तत्साम्याभावेऽपि ततोऽर्वाचीनं पापं कालतारतम्येन भवतीत्यवगम्यते। यः समाचरेत्स पापी भवतीत्यध्याहृत्य नित्वा योजनीया। अत्र किञ्चिदूनसंवत्सरसंसर्गोऽष्टमः पक्षः। यद्यपि किञ्चिदूनत्वं न श्रुतम्, तथापि सम्पूर्णसंवत्सरसंसर्गस्य पातित्यप्रयोजकत्वात् किञ्चिदूनत्वं कल्प्यते। तच्च पातित्यहेतुत्वं याज्ञवल्क्येन दर्शितम्। 'संवत्सरेण पतति पतितेन सहाचरन्, इति। इत्थं पतितसंसर्गे प्रकीर्णके निमित्तानुसारेण प्रायश्चित्तं व्युत्पादितमित्युक्तम्। अत्र 'तदूर्ध्वन्तु तत्समः' इति वाक्ये वस्तुगत्या पतित एव विवक्ष्यते; याज्ञवल्क्यवचनोपन्यासपूर्वकं तथा विवरणात्। तथाच तत्समशब्दप्रयोगोऽपि व्याख्यातः।

अयमत्र निष्कर्षः—

अन्त्यजानामुत्तम मध्यम-हीनानां पूर्वोद्धृतप्रायश्चित्तविमर्शनीतः संगृहीतवचनानुसारेणोत्तम-मध्यमाधमयुगचतुष्टयपर्यन्तं विप्रकर्षोऽपेक्ष्यते, अन्यथा तु स्नानं कर्तव्यम्। तत्रापि तृतीयादीनां स्पृष्टानामाचमनमात्रम्, न स्नानम्।

तेषां ग्रामप्रवेशविषये—उत्तम-मध्यमयोर्न ग्रामबाह्यत्वम्; हीनस्यैव ग्रामबाह्यत्वम्। यमधिकृत्य "बहिर्ग्रामाद् व्यपाश्रयः" "चण्डालकुटीराणि पूर्वोयां क्रोशमात्रे स्युः" "अभोज्याश्च स्वयं शूद्रैरस्पृश्योऽपि भवेत् पुनः। ग्रामादिष्वपराह्णे तु प्रविशेद् दण्डमर्हति" "ग्रामाच्चैव तथा दण्डपञ्चविंशतिमात्रके। दूरे चैव स्थित

प्रोक्तं ब्राह्मणाय विशेषतः ॥ पूर्वोक्ते ग्रामप्रावेश्या मलमोक्ष-शिरोरोगिणः सर्वाः" इत्यादिवचनानि प्रवृत्तानि । हीनास्त्ववर्णाः चण्डालास्तदन्तरालाः तत्प्रतिलोमाद्य सहयः पूर्वमुपक्षिप्ता एव । अत्र ग्रामशब्दप्रयोगात् नगरेषु एतेषां प्रवेशो न निषिद्ध इति मन्यते । अत्र विशिष्य—"ब्राह्मणाय विशेषतः" इति वचनाद्-ग्रहारेषु तेषां कथमपि न प्रवेशनं योग्यमिति मन्यते ।
सभाप्रवेशविषये तु—

श्रुताध्ययनसंपन्ना कुलीनाः सत्यवादिनः ।
राज्ञः सभासदः कार्याः शत्रौ मित्रे च ये समाः ॥

इति राजसभायां कुलीनानामेव सदस्यतायाः प्रतिपादनात् अवर्णा अपि सद्धर्ममेव परिपालयन्तः, तदन्तरालजाता एव मनुष्य-त्वाद्य नानधिकारिण इति वक्तुं शक्यते, यतो न श्रुताध्ययन-संपन्नानामिदानीन्तनराजसभायां विशिष्टापेक्षा वर्तते, धार्मिक-सभायां तु—श्रुताध्ययनसंपन्नानामेव कुलीनानामधिकारात् न त्रैवर्णिकेतरास्सदस्यतामर्हन्ति । अत एव—

इति स्पर्शनेनावस्थानस्यैव देवलेन निन्दितत्वात् विहाय देवलं केनाप्यन्येन स्मृतिकारेणात्र विषयेऽनुल्लेखाच्च विशिष्टस्थान-प्रबन्धादिव्यवस्थया ग्रामाद् बहिः पञ्चविंशतिदण्डमात्रविप्रकृष्टे स्थाने सभागृहनिर्माणेनाप्यनुज्ञायमानो न विरुद्ध इति प्रतिभाति। अत्र च धर्मज्ञा एव प्रमाणम्। अस्मिन्नवसरे स्पर्शास्पर्शविषये शास्त्रनियमितयुगपरिमाणव्यवस्थापि कर्तुं शक्यत एवेति सूच्यते। तच्च सभास्थानं प्रासादो देवमन्दिरं वा भवितुं नार्हति। यतः—

प्रासाद-देवहर्म्याणां चण्डालपतितादिषु।
अन्तः प्रविष्टेषु तथा शुद्धिः स्यात् केन कर्मणा॥

इति प्रासादहर्म्यादिकं तत्प्रवेशायोग्यमिति प्रतिपादितम्। अत्र प्रसङ्ग इदमपि सूच्यते—मण्डपभेदोऽपि-सभायामपेक्ष्यत इति—"चण्डालगृहप्रवेशने चण्डालैकगृहे वृक्षच्छायायां वा सहावस्थाने चण्डाल एव स्यात्, ब्राह्मणानुशिष्टं षाण्मासिकं चरेत्" इति प्राचेतसवचनेन ज्ञायते, यत एकमण्डपच्छायापि परिहार्येति वर्ण्यते। तथाच निरावरणे स्थाने सभायां सर्वेषामवस्थानं न कथमपि विरुद्धमिति केचित्। कादाचित्कसभाप्रवेशादिविषयम-प्युक्तं वचनमिति वक्तुं न शक्यते, केवलं घण्टाद्वयं सहावस्थान-मात्रेण षाण्मासिकव्रतानुष्ठानासंभवात्, किन्तु तेन साकमावासा-दिविषयमेवोक्तं वचनम्। अत एव—

चण्डालेन समं सुप्त्वा त्रिरात्रेण विशुद्ध्यति।
चण्डालैकसर्गी गत्वा सावित्रीस्मरणाच्छुचिः॥

इति पराशरवचनमुपपद्यते। तथाचैकच्छायायां सहशयना-दिपर्यन्तसहवासस्यैव दोषत्वस्यात्र प्रतिपादनात् एकत्र मण्डपे सभायामस्पर्शेनावस्थाने न कोऽपि दोष इति परे मन्यन्ते।

सभायां तत्प्रवेशने स्पर्शने च कर्तव्ये समापतिते तु—

संकटे विषमे चैव दुर्गे चैव विशेषतः ।
हट्टपत्तनमार्गे च यथासंभवमिष्यते ॥
तृणकाष्ठादिघातेन कुड्येनान्तरितेऽपि च ।
गोपालव्यजने चैव स्नानं तत्र न विद्यते ॥"

इति वचनानुसारेण यथासंभवं कर्तव्यम् । एकासनपरिग्रहस्तु—

एकशाखां समारूढः फलान्यश्नात्यसौ यदि ।
प्रायश्चित्तं त्रिरात्रं स्यात् पञ्चगव्यविशोधनम् ॥"
एकशाखां समारूढश्चण्डालादि यथा भवेत् ।
ब्राह्मणस्तत्र निवसन् स्नानेन शुचितामियात् ।"

इत्यापस्तम्बवचनयोरेकशाखासम्बन्धस्य निषेधात् निषिद्ध एव । तदुक्तं स्मृतिचन्द्रिकायाम्—अत्र शाखाग्रहणमेवंजातीयद्रव्योपलक्षणार्थम् । अत्र संग्रहकारः—

तार्णे संस्तर एकस्मिन्नस्पृश्यैस्सह तिष्ठति ।
अस्पृश्यैस्तैरस्पृष्टोऽस्मीत्येवं मूढस्तु मन्यते ॥" इति ।
"कुण्डे मञ्चे शिलापृष्ठे नौकायां गजपृष्ठके ।
संभ्रमे संकटे चैव स्पर्शदोषो न विद्यते ।" इति वचनं त्वपवादविषयमेव ।

काशीब्राह्मणमहासम्मेलने—मध्यस्थाः धर्माचार्याश्च—"चण्डालानां ग्रामान्तर्निवासः देवालयप्रवेशः स्पर्शश्च शास्त्रेण निषिध्यते, इत्येव वदन्ति, नतु सभाप्रवेशविषये किमपि ।

एककूपोदकादिव्यवहारविषये तु शूलपाणिभट्टाचार्यैः प्रायश्चित्तविवेक एवं व्यवस्थापितम्—

तत्रापस्तम्बः—चण्डालकूपभाण्डेषु यस्त्वज्ञानाद् जलं पिबेत् ।
प्रायश्चित्तं कथं तत्र वर्णे वर्णे विधीयते ।

इति स्पर्शनेनावस्थानस्यैव देवलेन निन्दितत्वात् विहाय देवलं केनाप्यन्येन स्मृतिकारेणात्र विषयेऽनुल्लेखाच्च विशिष्टस्थानप्रबन्धादिव्यवस्थया ग्रामाद् बहिः पञ्चविंशतिदण्डमात्रविप्रकृष्टे स्थाने सभागृहनिर्माणेनाभ्यनुज्ञायमानो न विरुद्ध इति प्रतिभाति। अत्र च धर्मज्ञा एव प्रमाणम्। अस्मिन्नवसरे स्पर्शास्पर्शविषये शास्त्रनियमितयुगपरिमाणव्यवस्थापि कर्तुं शक्यत एवेति सूच्यते। तच्च सभास्थानं प्रासादो देवमन्दिरं वा भवितुं नार्हति। यतः—

> प्रासाद-देवहर्म्याणां चण्डालपतितादिषु।
> अन्तः प्रविष्टेषु तथा शुद्धिः स्यात् केन कर्मणा॥

इति प्रासादहर्म्यादिकं तत्प्रवेशायोग्यमिति प्रतिपादितम्। अत्र प्रसङ्ग इदमपि सूच्यते—मण्डपभेदोऽपि-सभायामपेक्ष्यत इति—"चण्डालगृहप्रवेशने चण्डालेनैकगृहे वृक्षच्छायायां वा सहावस्थाने चण्डाल एव स्यात्, ब्राह्मणानुशिष्टं षाण्मासिकं चरेत्" इति प्राचेतसवचनेन ज्ञायते, यत एकमण्डपच्छायापि परिहार्येति वर्ण्यते। तथाच निरावरणे स्थाने सभायां सर्वेषामवस्थानं न कथमपि विरुद्धमिति केचित्। कादाचित्कसभाप्रवेशादिविषयसंप्युक्तं वचनमिति वक्तुं न शक्यते, केवलं चण्डालद्वयं सहावस्थानमात्रेण षाण्मासिकव्रतानुष्ठानासंभवात्, किन्तु तेन साकमावासादिविषयमेवोक्तं वचनम्। अत एव—

> चण्डालेन समं सुप्त्वा त्रिरात्रेण विशुद्ध्यति।
> चण्डालैकमयीं गत्वा सावित्रीस्मरणाच्छुचिः॥

इति पराशरवचनमुपपद्यते। तथाचैकच्छायायां सहशयनादिपर्यन्तसहवासस्यैव दोषत्वस्यात्र प्रतिपादनात् एकत्र मण्डपे सभायामस्पर्शनावस्थाने न कोऽपि दोष इति परे मन्यन्ते।

सभायां तत्प्रवेशने स्पर्शने च कर्तव्ये समापतिते तु—

संकटे विषमे चैव दुर्गे चैव विशेषतः ।
हट्टपत्तनमार्गे च यथासंभवमिष्यते ॥
तृणकाष्ठादिघातेन कुड्येनान्तरितेऽपि च ।
गोयालव्यजने चैव स्नानं तत्र न विद्यते ॥"

इति वचनानुसारेण यथासंभवं कर्तव्यम् । एकासनपरिग्रहस्तु—

एकशाखां समारूढः फलान्यश्नात्यसौ यदि ।
प्रायश्चित्तं त्रिरात्रं स्यात् पञ्चगव्यविशोधनम् ॥"
एकशाखां समारूढश्चण्डालादि यथा भवेत् ।
ब्राह्मणस्तत्र निवसन् स्नानेन शुचितामियात् ।"

इत्यापस्तम्बवचनयोरेकशाखास्पृश्यस्य निषेधात् निषिद्ध एव । तदुक्तं स्मृतिचन्द्रिकायाम्—अत्र शाखाग्रहणमेवंजातीयद्रव्योपलक्षणार्थम् । अत्र संग्रहकारः—

तार्णे संस्तर एकस्मिन्नस्पृश्यैस्सह तिष्ठति ।
अस्पृश्यैस्तैरदुष्टोऽस्मीत्येवं मूढस्तु मन्यते ॥" इति ।
"कुण्डे मञ्चे शिलापृष्ठे नौकायां गजपृष्ठके ।
संभ्रमे संकटे चैव स्पर्शदोषो न विद्यते ।" इति वचनं स्वपक्षविषयमेव ।

काशीब्राह्मणमहासम्मेलने—मध्यस्थाः धर्माचार्याश्च—"चण्डालानां ग्रामान्तर्निवासः देवालयप्रवेशः स्पर्शश्च शास्त्रेण निषिध्यते, इत्येव वदन्ति, नतु सभाप्रवेशविषये किमपि ।

एककूपोदकादिव्यवहारविषये तु शूलपाणिभट्टाचार्यैः प्रायश्चित्तविवेक एवं व्यवस्थापितम्—

तत्रापस्तम्बः—चण्डालकूपभाण्डेषु यस्त्वज्ञानाद् जलं पिबेत् ।
प्रायश्चित्तं कथं तत्र वर्णे वर्णे विधीयते ।

चरेत् सान्तपनं विप्रः प्राजापत्यं तु भूमिपः ।
तदर्धं चरेद्वैश्यः पादं शूद्रस्य दापयेत् ॥

अनभ्यासे देवलः—

चण्डालकूपभाण्डेषु यस्त्वज्ञानात् जलं पिबेत् ।
स तु त्र्यहेण शुध्येत शूद्रस्त्वेकेन शुद्ध्यति ॥

विशेषमाह शातातपः—

चण्डालोदकभाण्डेषु यः पिबेत् तृषितो जलम् ॥
तत्क्षणात् क्षीयते तच्चेत् प्राजापत्येन शुद्ध्यति ॥
यदि न क्षीयते तोयं चिरेणैवास्य जीर्यति ।
प्राजापत्यं न कर्तव्यं कृच्छ्रं सांतपनं चरेत् ॥

चण्डालपरिगृहीतान्यखानितकूपादावङ्गिराः—

चण्डालपरिगृहीतं यो ह्यज्ञानादुदकं पिबेत् ।
तस्य शुद्धिं विजानीयात् प्राजापत्येन नित्यशः ॥

आपद्यापस्तम्बः—श्वपाकचण्डालपरिग्रहे तु पीत्वा जलं पञ्चगव्येन शुद्धिः ।

चण्डालस्पृष्टजलक्षीरादिपानेऽङ्गिराः—

यत्तु चण्डालसंस्पृष्टं पिबेत् किञ्चिदकामतः ।
सतु सन्तपनं कृच्छ्रं चरेत् शुद्ध्यर्थमात्मनः ॥

आपस्तम्बः—

चण्डालेन तु संस्पृष्टा अपो यः पिबति द्विजः ।
त्रिरात्रोषितो भूत्वा पञ्चगव्येन शुद्ध्यति ॥

अत्रापवादे यमः—

आममांसं घृतं क्षौद्रं स्नेहाश्च फलसंभवाः ।
म्लेच्छभाण्डस्थिता दुष्टाः, निष्क्रान्ताः शुचयः स्मृताः ॥

अन्त्यजखानितकूपादिजलपाने आपस्तम्बः—

अन्त्यजैः खनिताः कूपास्तडागानि तथैव च ।
एषु स्नात्वा च पीत्वा च पञ्चगव्येन शुद्ध्यति ॥

यत्तु वृद्धशातातपवचनम्—

"अन्त्यैरपि कृते कूपे सेतौ वाप्यादिके तथा।
तत्र स्नात्वा च पीत्वा च प्रायश्चित्तं न विद्यते॥"

इति, तदापद्विषयम्। अन्त्यजभाण्डस्थजलादिपाने—

पराशरः—

"भाण्डस्थिता अभोज्यानामपः पीत्वा पयो दधि।
ब्राह्मणः क्षत्रियो वैश्यः शूद्रश्चैवोपसर्पति।
ब्रह्मकूर्चोपवासश्च याज्यवर्णस्य निष्कृतिः।
शूद्रस्य नोपवासस्तु दिनेनैकेन शुद्ध्यति॥" इति।
"सर्वत्र पावनी गङ्गा त्रिषु स्थानेषु दूषिता।
म्लेच्छस्पर्शे सुराभाण्डे कूपोदकविमिश्रिते॥"

इति वचने तु म्लेच्छस्पर्शमात्रे गङ्गाजलस्य दोषत्वप्रतिपादनादन्यत्रान्त्यजादिस्पर्शेऽपि तस्य न दोषत्वमिति बङ्गीयाः। अत्रान्त्यजाः—"सर्वासामन्त्यजातीनां स्पर्शो स्वाचमनं विदुः। येषां तु ब्राह्मणो नास्ति तेषां स्नानं विधीयते" इति वचनाद् ब्राह्मणपौरोहित्यवन्त एवान्त्यजा गृह्यन्ते, नतु चर्मकारादयोऽपि, इतितु तदाशयः। अत्र म्लेच्छपदेन चण्डालादीनामप्युपलक्षणात्, म्लेच्छनिन्दायां कूपोदकनिन्दायां चैव तात्पर्याद् गङ्गाजलस्यापि चण्डालस्पर्शे दोषत्वमेवेति केचन।

अत एव—

चण्डालो वापि यस्यास्ये न्यस्येद् गङ्गाजलं परम्।
सोऽपि मुक्तिं लभेन्मर्त्यः किं वा पुत्रादिना द्विज।
नीचोत्तमविचारस्तु कालाकालविचारणा।
देशादेशविचारस्तु न गङ्गासलिले भवेत्॥
ग्रासमात्रं तु गङ्गाम्बु प्रणमेत् संग्रहेत् पिबेत्॥

इति बृहद्धर्मपुराणवचने चण्डालोऽपीत्यपिशब्दप्रयोगेण गङ्गास्तुतावेव तात्पर्यमवसीयते ।

"समन्ततश्चतुर्हस्तो जलाधारो भवेद्यदि ।
अन्त्यजैरपि संस्पृष्टो पूतो वाप्यादिवद्भवेत् ॥"
"चण्डालपतितादीनां पुष्करिण्यां ह्रदेऽपि वा ।
जानुदघ्नाच्छुचि ज्ञेयमधस्तादशुचि स्मृतम् ।"
"समन्ताच्चतुरो हस्तान् जलाधारो भवेद्यदि ।
अन्त्यजैरपि संस्पृष्टो पूतो भवति नान्यथा ।"

इत्यादिवचनानि मत्स्यसूक्त-देवल-बृहद्याज्ञवल्क्यस्मृत्यादिगतानि तु समन्ताच्चतुर्हस्तपरिमितकूपादीनां जानुदघ्नप्रदेशात्परत एव तदीयानां जलानां शुद्धत्वं प्रतिपादयन्ति, नतु ततः पूर्वतनानामपि । अत्र हस्तपरिमाणं तु—

अष्टशतं षण्णवतिः परिमाणं चतुरशीतिर्वा पुंसाम् ।
उत्तम-मध्यम-नीचानामङ्गुलिसङ्ख्या स्वमानेन ।"

इत्युक्तपरिमाणेषु सप्तधा विभक्तेषु पादोनांशद्वयमितमेव, ततश्चोत्तमपरिमाणेन हस्तपरिमाणविवक्षायाम्—उत्तमपुरुषमध्याङ्गुलिमध्यपर्वपरिमितस्यैवाङ्गुलत्वात् नाधिकैकत्रिंशाङ्गुलपरिमितमेवैकहस्तपरिमाणं भवति । उक्तचतुर्हस्तपरिमितस्तु कूपो [redacted] सांप्रतं कुत्रापि दृश्यते, इति तादृशकूपखननमप्रधन्यं विना नान्त्यजानामन्येषां [redacted] साधारणः कूपो भवितुमर्हति । सर्वथा [redacted] सांप्रतिकाः कूपाः नोक्तपरिमाणाः, इति नेदानीन्तनकूपोदकग्रहणेऽन्त्यजानामधिकारस्साधारणः संभवति ।

एतेन—जलाशयेष्वथाल्पेषु स्थावरेषु महीतले ।
कूपवत् कथिता शुद्धिर्महत्सु तु न दूषणम् ॥"
इति संवर्तवचनमपि—व्याख्यातम् ।

तत्राक्षोभ्यतटाकानि नदीवाप्यः सरांसि च ।
कश्मलाशुचियुक्तानि तीर्थतः परिवर्जयेत् ।"
"दीर्घकाष्ठे शिलापृष्ठे नौकायां जाह्नवीतटे ।
महातीर्थे तु संप्राप्ते स्पर्शदोषो न विद्यते ।"

इत्यादिदक्षादिवचनानि तु नद्यादावपि तत्तद्घट्टानां पृथक्-करणमेव प्रतिपादयन्ति, नतु सर्वथा स्पृश्यत्वम् । इदं च नोत्तरदेशे दृश्यते । काश्यादौ सर्वत्रैकत्रैव घट्टे सर्वेषां स्नानादिदर्शनात्, दक्षिणदेशे तु वर्तते । तत्र च तत्तद्देशीया धर्मज्ञा एव प्रमाणम् । तदेवमन्त्यजानां स्पर्शास्पर्शविषयोऽपि व्याख्यातः । इदं सर्वमापदि स्पर्शदोषाभावप्रतिपादनपराणामन्त्यजादिस्पर्शपरत्वमेव, नाशौचिस्पर्शास्पर्शपरत्वमिति स्वीकृत्यैव वर्णितम् । यतः प्रायेण सर्वेऽपि निबन्धकारा एवमेव मन्यन्ते ।

तदिदं सिद्धम्—यत् जातिविभागोऽयं वर्णभेदेनानुलोमप्रतिलोमादिभेदेन च जन्मत एव वर्तते, नतु गुणतः । विद्यन्ते हीदानीमपि ब्रह्म-क्षत्रिय-वैश्य-शूद्रा वर्णा अनुलोम-प्रतिलोमादिसंकराश्च बहुशोऽत्र भारतवर्षे ।

कलौ क्षत्रिय-वैश्ययोरभाव इति वादस्तु—नन्दपण्डितैः पराशरस्मृतिव्याख्यावसरे समालोचितः, स एवास्माभिरपि मन्यत इति तदीयानि वाक्यानि संगृह्णीमः ।

तथाहि—"ननु चतुर्वर्णधर्मप्रश्नोऽयमनुपपन्नः; कलौ क्षत्रिय-वैश्ययोरभावात् । तथाच भागवते—

"महानन्दिसुतो राजन् शूद्रागर्भोद्भवो बली ।
महापद्म इति ख्यातो नन्दक्षत्रविनाशकृत् ॥
ततो नृपा भविष्यन्ति शूद्रप्राया अधार्मिकाः ।
येऽतीता वर्तमाना ये भविष्यन्ति च पार्थिवाः ।

तेऽत्र उद्देशतः प्रोक्ताः वंशीयाः सोम-सूर्ययोः ।
आरभ्य भवतो जन्म यावचन्द्रा(नन्दा)भिषेचनम् ।'' इति

अत्र सामान्येन क्षत्रविनाशावगमात्—परीक्षितमारभ्य नन्दपर्यन्तमेव तत्सद्भावबोधनाद्योपरिष्टात् तदभावो गम्यते, वैश्यानां त्वनुपलब्ध्यैव तन्निश्चय इति; उच्यते, अत्रोपक्रमोपसंहाराभ्यां क्षत्रियाणां राज्याभावमात्रं प्रतीयते, न स्वरूपाभावः, तत्र क्षत्रविनाशकृदित्यनेन न तत्सिद्धिः; तस्यापि ताभ्यां राज्याभावमात्रपरत्वात्, अन्यथा प्रत्यक्षविरोधापत्तेः, प्रत्यक्षेणैव तदुपलब्धेः । अत एव हरिवंशे—

वैश्याचाराश्च राजन्या धनधान्योपजीविनः ।
युगोपक्रमे पूर्वे भविष्यन्ति द्विजातयः ।'' इति ।

युगोपक्रमे—कलियुगोपक्रमे; तथैवोपक्रमात् । एवं च वैश्यानामपि गुर्जरदेशे प्रत्यक्षोपलब्धिरेव सत्तागमिकेत्यलं विस्तरेणेति ।

युक्तं चैतत्—अत एव—यावन्नन्दाभिषेचनमित्युपसंहार उपपद्यते । अनेन तु क्षत्रियाणामभिषिक्तानां नन्दपर्यन्तमेव सत्त्वेति ज्ञाप्यते । मूर्धावसिक्तास्तु अभिषिक्ता अपि क्षत्रियधर्मेण वर्तमानाः सांप्रतमपि वर्तन्ते केचिद्राज्यादिषु । एतेन—नन्दान्तं क्षत्रियकुलमित्यपि—व्याख्यातम्; क्षत्रियकुलपदेनाभिषिक्तक्षत्रियकुलस्यैव विवक्षणात् । "कलावाद्यन्तयोः स्थितिः'' इति स्वामिवाक्याभिप्रायम्; ततः क्षत्रियवैश्यकुलोत्पन्ना अपि बहव एवाकृतोपनयनाः व्रात्यक्षत्रिया व्रात्यवैश्याश्च जातितः क्षत्रिय-वैश्या अपि वृषलसमाना एव दृश्यन्ते । तत्र च "वृषलत्वं गता राजन् ब्राह्मणादर्शनेन च ।'' इति ब्राह्मणादर्शनमेव कारण तया वर्णितमिति गुर्जरदेशादौ ब्राह्मणादर्शनाभावेनाविच्छिन्नोपनयनादयः क्षत्रिय-वैश्या अपि प्रत्यक्षमुपलभ्यन्ते । मरुदेशादौ तु—यत्र कृतोपनयानानामकृतोपनयानानां च विवाहादि-

सम्बन्धो दृश्यते वैश्यानामपि जातितः, बहुपरम्परापर्यन्तमनुपनीतानामप्युपनयनसंस्कारो धर्मप्राणैरपि पण्डितवर्यैरभ्यनुज्ञायते, तत्र मूलं तु तत्तद्देशाचार एव प्रमाणम् । धर्मसूत्रादिविरुद्धो देशाचारोऽपि प्रमाणमिति तु कल्पना न साधीयसी। सति-चैवम्—सनातनधर्मावलम्बिनां समुन्नतिर्मरुदेशीयानामेतादृशानामपि क्षत्रिय-वैश्यात्वादिग्रहणेनैव यदि संपादनीया, अन्यथा तु सनातनधर्मसंस्थानां जीवनमेव संशयितं स्यादिति कारणेन धार्मिका अपि धर्मज्ञाः परिस्थितिमनुसृत्य प्रायश्चित्तादिसंकोचनेन व्रात्यसंस्कारं बहुपरम्परातिक्रमेऽपि यत् कुर्वन्ति, तदिदं देशान्तरीयेषु क्षत्रिय-वैश्ययोरपि विषये कथं नोपयुज्यते? का चात्र विनिगमना? व्यक्तिविशेषाणां जातिविशेषव्यवस्था हि तत्तत्समाजाधीनैव, नतु धर्मज्ञाधीना, शास्त्राधीना वा। सति चैवं यत्र देशे क्षत्रियजातित्वं वैश्यजातित्वं वा स्वसमाजीयानां सर्वेषामपि समाजविशेषा मन्यन्ते, तत्र मरुदेशीयक्षत्रिय-वैश्यादिविषयिण्येव व्यवस्था सर्वथा समादरणीया, मद्रासप्रान्ते कोमुट्टिपदवाच्यास्तु—कामिकागमोक्ता गोमुष्टिजातिविशेषा एव, शब्दसामान्यात्, इति मन्वाना एव धर्मज्ञाः, तेषां वैदिककर्मानधिकारं मन्यन्ते। परंतु मन्यन्ते—सांप्रतं तेष्वपि बहवोऽविच्छिन्नोपनयना: वैदिकाचारैरेव सर्वानपि व्यवहारानतुतिष्ठन्तः श्रीशृङ्गगिरि-श्रीकामकोटिपीठाधिष्ठानादिधर्माचार्यैर्यथावदेव व्यवह्रियमाणाश्च बहव एव वर्तन्ते, कोमुट्टिपदव्यपदेशो हि न किञ्चित्करः, एवमेवान्ध्रदेशेऽपि, इति न केवलं गुर्जरदेशे, नवा मरुदेशे, किन्तु सर्वेषु देशेषु क्षत्रिय-वैश्या वर्तन्त एव। तेषां विच्छिन्नोपनयनपरम्पराकाणां व्रात्यसंस्कारव्यवस्थायां तु तत्तद्देशीया धर्मज्ञा एव प्रमाणमिति।

---




# धर्मप्रदीपः

## शुद्धितत्त्वप्रकाशः

शुद्धितत्त्वे हि समालोचनीये विषयद्वयमस्माकं पुरतः स्फुरति—व्रात्यसंस्कारः, मतान्तरं प्रविष्टानां पुनः स्वमतप्रवेशनं च। देवालये जातिविशेषाणां स्थानविशेषव्यवस्था तु जातितत्त्व एव समालोचिता। तत्र प्रथमं व्रात्यसंस्कारं समालोचयामः॥

व्रात्या नाम यथाकालमनुपनीता ब्राह्मण-क्षत्रिय-वैश्याः, तत्तज्जातिधर्मबहिष्कृताः शुद्धैर्ब्राह्मण-क्षत्रिय-वैश्यैः संव्यवहारायोग्याश्च ये, त एव।

तदाह यमः—"समतिक्रान्तकालास्तु पतिताः सर्व एव ते॥"

व्यासः—"ब्राह्मण-क्षत्रिय-विशां कालश्चेदत्यगाद्यम्।
सावित्रीपतिता व्रात्याः परिहार्याः प्रयत्नतः॥"

वसिष्ठः—"नैनानुपनयेयुः नाध्यापयेयुः, न याजयेयुः,
नैभिर्व्यवहरेयुः।"

मनुः—"नैतैरपूतैर्विधिवदापद्यपि हि कर्हिचित्।
ब्राह्मान् यौनांश्च सम्बन्धानाचरेत् ब्राह्मणस्सह॥"

संग्रहकारः—व्रात्यस्याकृतचित्तस्य न कार्यमुपनायनम्।
अध्यापनं याजनं च विवाहादि च वर्जयेत्॥

याज्ञवल्क्यः—"अत ऊर्ध्वं पतन्त्येते सर्वधर्मबहिष्कृताः।
सावित्रीपतिता व्रात्या व्रात्यस्तोमादृते क्रतोः।"

वसिष्ठस्तु प्रायश्चित्तान्तरमाह—"पतितसावित्रीक औद्दालकं व्रतं चरेत्, द्वौ मासौ यावकेन वर्तयेत्, मासं पयसाऽर्धमासमामिक्षयाऽष्टरात्रं घृतेन, षड्रात्रमयाचितम्, त्रिरात्रमब्भक्षः, अहोरात्रमुपवसेत् अश्वमेधावभृतं वा गच्छेत् व्रात्यस्तोमेन वा यजेत" इति।

अत्रेदं पारस्करगृह्यसूत्रं तद्विवरणं च—

"अत ऊर्ध्वं पतितसावित्रीकाः भवन्ति। नैनानुपनयेयुर्नाध्यापयेयुर्न याजयेयुर्न चैभिर्व्यवहरेयुः। कालातिक्रमे नियतवत्। त्रिपुरुषं पतितसावित्रीकाणामपत्ये संस्कारो नाध्यापनं च, तेषां संस्कारेप्सुः व्रात्यस्तोमेनेष्ट्वा काममधीयीरन् व्यवहार्या भवन्तीति।

अत्र कर्कः—त्रिपुरुषं पतितसावित्रीकाणामपत्येऽसंस्कारो नाध्यापनं चेति चतुर्थादिपरम्परायां व्रात्यानां नोपनयनादि सर्वमिति व्याचष्टे।

जयरामः—त्रिपुरुषमिति। एषां त्रयाणामपत्ये चतुर्थे पुरुषे कृतप्रायश्चित्ते केवलमुपनयनाख्यः संस्कारः, नाध्यापनादिरिति विवृणोति।

हरिहरस्तु—त्रीन् पुरुषान् यावत् ये पतितसावित्रीकाः पितृ-पुत्र-पौत्रास्तेषामपत्ये पुत्रे संस्कार उपनयनं भवति, न पुनश्चतुर्थादीनाम्। तेषां चोपनीतानामपि अध्यापनं न भवति। मूकोन्मत्तौ तु संस्कार्याविति केचित्। कर्मस्वनधिकारात् तेषां पातित्यं नास्ति; तदपत्यं तु संस्कार्यम्। "ब्राह्मण्यां ब्राह्मणाज्जातो ब्राह्मण एवे"ति स्मृतेः। अन्ये तु तावपि संस्कार्यावित्याहुः। होमं तावदाचार्यः करोति। आपस्तम्बः—शूद्राणामदुष्टकर्मणामुपनयनम्। एतच्च रथकारविषयम्; तस्य मातामहोद्धारकं शूद्रत्वमिति व्याख्याति।

गदाधरोऽपि—त्रीन् पुरुषान् यावत् ये पतितसावित्रीकाः पितृ-पुत्र-पौत्राः, तेषां त्रयाणां पतितसावित्रीकाणामपत्ये चतुर्थे पुरुषेऽसंस्कार उपनयनसंस्कारो न भवति, अध्यापनं च न भवति। तेषां पितृ-पुत्र-पौत्राणां मध्ये यः संस्कारेप्सुः आत्मानं संस्कारयितुकामः, स व्रात्यस्तोमेनेष्ट्वा व्यवहार्यो भवति इति टीकयति।

अत्र त्रयाणामित्यस्य पितृ-पुत्र-पौत्राणामिति विवरणं सर्वेषां समानम्। तथाच प्रपितामह-पितामह-पितॄणामनुपनीतत्वे पुत्रस्यापि नोपनयनम्, अथवा नाध्यापनमात्रमिति विवरणाशयोऽवगम्यते। सति चैवम्—"यस्य पिता पितामहश्चानुपेतौ स्याताम्, तेषामिच्छतां प्रायश्चित्तम्, यस्य प्रपितामहादि नानुस्मर्यंत उपनयनम्, ते श्मशानसंस्तुताः" इत्यापस्तम्बधर्मसूत्रस्य पारस्करगृह्यसूत्रस्य चार्थभेदो वर्तते, यतः पारस्करमते प्रपितामहमारभ्यानुपनयने नप्तुर्नोपनयनमिति मन्यते गदाधरादिमते, आपस्तम्बमते तु तस्याप्युपनयनं मन्यते। कर्कादिमते तु चतुर्थस्योपनयनं वर्तते, अध्यापनमात्रं न वर्तते इति स्वीकारात् सत्यमस्त्येकवाक्यता। तथाच चतुर्थस्यानुपनयने तन्मात्रस्य नाध्यापनमात्रम्, व्यवहार्यतादिकं तु वर्तत एव। तत्पुत्रादीनां तु सर्वं मूकोन्मत्तादिपुत्रादीनामिवेति फलति।

तथाच यस्य प्रपितामहादि नानुस्मर्यंत इति वाक्यस्यापि "त्रिपुरुषमनुपनीतानामपत्ये" इत्यनेनैकार्थ्यात् प्रपितामहादीत्यादिशब्दः प्रपितामहमारभ्याधस्तात् त्रयाणां पुरुषाणां बोधनमेवाभिप्रैति, इति प्रपितामहमारभ्यानुपनयने पञ्चमादिपरम्परायामपि व्रात्यसंस्कारसंभव इति कल्पनं न केषांचन सांप्रतम्। पञ्चमपरम्परायामनुपनीतस्य केवलं प्रायश्चित्तीयता, उपनयनं तु मूकोन्मत्तादिपुत्राणामिव तत्पुत्रादीनामेव भवति, इति केचिन्मन्यन्ते। यत्तु अत्र—वचने त्रयाणां पुरुषाणामनुपनयने यद् व्रात्यत्वम्, तस्यैव प्रायश्चित्तेन निर्हार इति स्वमतम्, स्वान्तेवासिमतं तु द्वादशपुरुषाणां ततोऽधिकानामपि अनुपनयनेऽपि यद् व्रात्यत्वम्, तस्यापि द्वादशवार्षिकप्रायश्चित्तमिति—इत्यादि व्रात्यसंस्कारमीमांसायां श्रीराममिश्रशास्त्रिभिर्विवेचितम्, तत्र वयं पश्यामः—यदुज्ज्वलावृत्तिसहितानामुक्तापस्तम्बसूत्राणां स्वारस्यं द्वादशपरम्परापर्यन्तं व्रात्यसंस्कारयोग्यतायां न भवतीति।

अत्र केचित् यस्य प्रपितामहादि नानुस्मर्यंत उपनयनं तस्य द्वादशवार्षिकप्रायश्चित्तविधानपरं मूले प्रतिपुरुषं संख्याय यावन्तोऽनुपनीता इतीत्यस्यानुपङ्गो च उज्वलावृत्तौ सूचितः, तत्पर्यालोचनेन *द्वादशपरम्परापर्यन्तं व्रात्यसंस्कारयोग्यता वर्तत इति गम्यत*—इति वदन्ति । अन्ये तु—द्वादशवर्षाणीत्युपलक्षणम्, प्रतिपुरुषं संख्याय संवत्सरानिति वचनानुसारेणासंख्यातानामनुपनीतत्वेऽपि तावद्वर्षप्रायश्चित्तेन सर्वधर्माधिकारो भवतीति—मन्यन्ते ।

अत्रेदमेव प्रष्टव्यं यत्—द्वितीयमतानुसरणे प्रतिपुरुषं संख्यायेत्यनेनैव गतार्थत्वात् यस्य प्रपितामहादि नानुस्मर्यत इति पृथक् सूत्रान्तररचनं सूत्रकाराणां किमर्थमिति ? यदि तु प्रपितामहस्यानुपनयनमारभ्य द्वादशवार्षिकप्रायश्चित्तव्यवस्थापनार्थं तत्सूत्रमिति वर्ण्यते, तर्हि प्रतिपुरुषं संख्याय संवत्सरानित्यस्य योजनं कथमत्र सम्पाद्यते ? यदि तु प्रपितामहस्यानुपनीतत्वे एकं द्वादशवार्षिकम्, स्वस्य कालातिक्रमे प्रपितामहस्यानुपनीतत्वे च द्वादशवार्षिकत्रयम्, प्रपितामहस्य पितुरनुपनीतत्वे स्वस्य कालातिक्रमे च द्वादशवार्षिकत्रयमिति रीत्या विवरणमभिप्रेयते, तर्हि प्रपितामहपितुर्वृद्धप्रपितामहस्य पर्यन्तमेवानुपनीतत्वे व्रात्यसंस्कारयोग्यता, न तदनन्तरानुपनीतत्वेऽपि । यतो द्वादशवार्षिकचतुष्टयावसरो यदा भवति, तदा न प्रायश्चित्तमिति चतुर्थे नास्ति निष्कृतिरिति वचनानुसारेण *अन्यत्र व्यवस्थापितम्* ? इति कथमसंख्यातानामनुपनीतत्वेऽपि व्रात्यसंस्कारोचित्यं भवति ? एतेन—प्रपितामहस्यापि पितुरनुपनीतत्वे प्रायश्चित्तं नोक्तं धर्मज्ञैस्तदितरम्, एवं ततः पूर्वस्यापीत्युज्ज्वलावृत्तिगतं वाक्यजातमपि—व्याख्यातम् । अनेनापि हि प्रतिपुरुषं संख्याय द्वादशवार्षिकसंख्याव्यवस्थापन एव धर्मज्ञानामधिकारः प्रकाश्यते, न तु नूतनप्रायश्चित्तव्यवस्थापने । एतेन प्रथममतमपि प्रत्युक्तम् । तत्र हि मते प्रपितामहस्य पितुरनुप-

नीतत्वेऽपि प्रायश्चित्तमुक्तमिति तदनुक्तेर्धर्मज्ञैरूहनीयत्वं यदुज्ज्वलायामुक्तम्, तद्विरोधः; प्रतिपुरुषं संख्यायेत्यस्यानन्वयात्। प्रतिपुरुषं संख्यायेत्यस्य 'यस्य प्रपितामहादी'त्यत्रानुषङ्गस्योज्ज्वलाप्रतिपादितस्य विरोधः; द्वादशवार्षिकप्रायश्चित्तविधानान्यथानुपपत्त्या द्वादशपरम्परापर्यन्तविवक्षाऽनौचित्यञ्च भवति। तथा चापस्तम्बसूत्राणां प्रपितामहपर्यन्तमनुपनीतत्व एव व्रात्यसंस्कारयोग्यतायां स्वारस्यम्, न द्वादशपरम्परानुपनीतत्वेऽसंख्यातानुपनीतत्वेऽपि वेति प्रतिभाति। "चतुर्थे नास्ति निष्कृतिरिति" वचनस्याप्येकवाक्यताविवक्षायां तु चतुर्थस्याप्यसंस्कार इति गदाधरादिविवरणमपि योग्यमेव, परं त्वापस्तम्बधर्मसूत्रेण नैकवाक्यता भवति।

सति चैवम्—"प्रपितामहस्य पितुरारभ्यानुपनयने तु ( पञ्चमादिपरम्परायां तु ) प्रायश्चित्तं धर्मज्ञैरूहितव्यम्" इति हरदत्तवृत्त्यां पञ्चमादिपरम्परायामप्युपनयनादिसंभव इति सूचनं चिन्त्योपपत्तिकं प्रतिभाति।

यत्तु सांप्रतमनुच्छिन्नोपनयनानामपि वैश्यानामान्ध्रदेश उत्कलदेशे दक्षिणात्येषु च वैदिककर्माधिकारविषये महान् कलकलो दृश्यते, सोऽयं निर्मूल एवेति तेषामनुच्छिन्नोपनयनपरम्पराकाणां वैदिककर्माधिकारो न कथमपि विरोधमर्हति।

यत्तु—उच्छिन्नोपनयनपरम्पराकाणामपि केचन जन्मतः स्वस्य क्षत्रियत्वं वैश्यत्वं च मन्वाना अपरेषामनुच्छिन्नोपनयनपरम्पराकाणामिव वैदिकमुपनयनं वैदिककर्माधिकारं चापेक्षन्ते, तत्रोक्तधर्मसूत्राणि यदि पर्यालोच्यन्ते, तर्हि न कोऽपि प्रतिविधानप्रकारः संभवति। सत्यप्येवं मरुदेशीयाः बहव एवोच्छिन्नोपनयनपरम्पराका अपि धार्मिकप्रवरैरपि व्रात्यस्तोमादिनोपनयनाय वैदिककर्माधिकाराय चानुमन्यन्ते, इति मरुदेशीयानां वैश्यानामाचारप्रथा तद्देशीयपण्डितवरैरनुमन्यमाना, दैशिकशिष्टा-

चारप्रामाण्येनैव कथमपि निर्वहणीया। गृह्यसूत्राणि हि प्रमाणतत्त्वोक्तरीत्या स्मृतिमूलकत्वादाचारसमकक्ष्या इति तद्देशीयाचारप्रामाण्यं तद्देशीयानां शरणमेव वर्तते। देशान्तरे तु न तथाऽऽचारो दृश्यते, इति गृह्यग्रन्थानुसारिण्येव व्यवस्था समादरमर्हति।

एतावत्तु विशदमिह वक्तुमिच्छामः—जातिविशेषाणां क्षत्रियत्वं वैश्यत्वं ब्राह्मणत्वं वा तत्तत्समाजैकनिर्णेयम्, नतु समाजान्तरेण। तत्तत्समाजदृष्ट्या जातिविशेषनिर्धारणायां तु—व्रात्यसंस्कारादिना तत्तद्व्रात्युचितमुख्यादिकर्माधिकारचर्चामात्रे शास्त्रीया व्यवस्थोपयुज्येत, नतु व्यक्तिविशेषस्य जातिविशेषादिव्यवस्थायामपि। चिरस्थायिनी जातिविशेषप्रसिद्धिः विप्रतिपद्यमानया स्वसमाज एव व्यक्तिविशेषैरेव स्वीक्रियमाणया वा प्रसिद्धया नान्यथायितुं शक्यते।

तथाच धर्मज्ञाः पण्डिता यदि हरदत्तवृत्तिमनुसृत्य, यदि वा गदाधरादिवृत्तिमनुसृत्य व्रात्यसंस्कारं व्यवस्थापयन्ति समाजविशेषस्य व्यक्तिविशेषस्य वा, तर्हि त एव तत्र प्रभिष्णवः।

काशीब्राह्मणमहासम्मेलने सर्वेऽपि धर्माचार्या ऐकमत्येन परम्पराश्रयपर्यन्तं व्रात्यसंस्कारः प्रशस्त इति व्यवस्थापयन्ति, ततश्च परम्पराश्रयातिक्रमेऽपि व्रात्यसंस्कारो गौणः, न भिन्न्य इति तदाशयः प्रतीयते।

एतेन—पतितपरावर्तनमपि—व्याख्यातम्, तदपि हि "संवत्सरेण पतति पतितेन सहाचरन्। याजनाध्यापनाद्यौनात् नतु यानासनाशनात्।" इति वचनेन संवत्सरपर्यन्तं लघुतरसंसर्गेणैव पातित्याभिधानात्, वत्सरचतुष्टयपर्यन्तं तदभ्यासे "चतुर्थे नास्ति निष्कृतिरि"तिन्यायेन तद्भावापत्त्या पुनः परावर्तनयोग्यताया विरहात् लघुतरसंसर्गे संवत्सरत्रयमध्य एव समादरमर्हति, नतु ततः पश्चात्। यौनसंसर्गे तु सद्य एव पातित्याभिधानात् तस्य यदापि लघुसंसर्ग-

कौटिप्रवेशासंभवः। तत्र स्त्रीविषये बलात्कारादिना योनसंसर्गस्य लघुत्वेन लघुप्रायश्चित्तादिव्यवस्थासंभवेऽपि पुंसां विषये तदसंभवात् पतितपरावर्तनमसंभवमेव। तदपत्यानां पादोनप्रायश्चित्तेन शुद्धिः संभवत्येव, यदि तान्यप्यज्ञानेन वत्सरचतुष्टयं तत्संसृष्टानि न भवन्ति। "कलौ पतति कर्मणा" "वत्वार्येव कलौ युगे" इत्यादिवचनं पतितसंसर्गत्वेन संसर्गस्य न महापातकत्वं यत् बोधयति, तदपि कर्मपतितपरमेव, नतु जातिपतितपरम् , इति "संवत्सरेण पतती" त्यादिवचनेन कलावपि जातिपतितम्लेच्छादिसंसर्गस्य पातित्यप्रयोजकत्वाङ्गीकारो न दोषाय।

एतेन—"संवत्सरैश्चतुर्भिस्तु तद्भावमधिगच्छति" इति पृथग्वचनसार्थक्यमपि—व्याख्यातं भवति।

अथ मदनरत्नप्रदीपः—

पतनशब्दार्थमाह गौतमः—द्विजातिकर्मभ्यो हानिः पतनम्, परत्र चासिद्धिरिति। द्विजातीनां यानि विहितानि कर्माणि श्रौतानि स्मार्तानि च तेभ्यो हानिः। तत्रानधिकारिणः परत्र लोकेऽसिद्धिः, पापकर्मप्रतिबन्धाद्युपात्तसुकृतफलानिष्पत्तिरित्यर्थः। अयञ्चानधिकारः प्रायश्चित्त-तदङ्गजपादिव्यतिरिक्तेषु बोद्धव्यः; अन्यथा तदुपदेशोऽनर्थकः स्यात्। तत्र द्विजातिग्रहणं तेषामपि पातित्यश्रवणात्। संयोगं चैव तैः सहेति। अत्र तच्छब्देन पूर्वोक्तमहापातकादियुक्ता लक्ष्यन्ते; साक्षात्परकीयपातकसंसर्गस्य कर्तुमशक्यत्वात्। तेनायमर्थः—तैः पूर्वोक्तब्रह्महत्यादिमहापातकचतुष्टयान्यतममहापातकयुक्तैः प्रत्येकं संयोगं संसर्गमपि महापातकमाहुरिति। अत एव याज्ञवल्क्यः स्पष्टमेव महापातकयुक्तसंसर्गस्य महापातकत्वमाह—

"ब्रह्महा मद्यपः स्तेनस्तथैव गुरुतल्पगः।
एते महापातकिनो यश्च तैः सह संवसेत् ॥" इति।

तैरिति सर्वनाम्ना पूर्वोक्तानां ब्रह्महत्यादिमहापातकयुक्तानां चतुर्णामेव परामर्शात्तत्संसर्गस्यैव महापातकत्वम्, न तु संसर्गिसंसर्गस्यापीत्यवगन्तव्यम्। संसर्गिसंसर्गस्य तु 'एनस्विभिरनिर्णिक्तैर्नार्थं कश्चित्समाचरेदिति' मनुना एनस्विमात्रसंसर्गस्य निषिद्धत्वात्पापजनकत्वमस्त्येव। महापातकिसंसर्गस्य पापहेतुत्वे विशेषमाह मनुरेव—

संवत्सरेण पतति पतितेन सहाचरन्।
याजनाध्यापनाद्यौनान्न तु यानासनाशनात्। इति।

अत्र पञ्चम्यौ द्वितीयार्थे। तेनायमर्थः—यानाशनासनानि पतितेन सहाचरन् कुर्वन् संवत्सरेण पतति, याजनाध्यापनयौनानि कुर्वन्न संवत्सरेण पतति, किन्तु सद्य एवेति। अत्र याजनं स्वेन तस्य, तेन वा स्वस्य। अध्यापनमपि स्वेन तस्य, तेन वा स्वस्य, यौनं योनिहेतुकः संसर्गः। तस्मै कन्यादानं तस्माद्वा कन्यायाः प्रतिग्रहः। यानं तेन सहैकयानारोहणम्। अशनं तेन सहैकस्यां पङ्क्तौ भोजनम्। आसनं तेन सहैकस्मिन्नासन उपवेशनम्। अत्रासनग्रहणमेकशय्याशयनस्योपलक्षणम्। वक्ष्यमाणवचनेनापि पातित्यहेतुत्वाभिधानाच्च। बृहद्विष्णुरपि—

संवत्सरेण पतति पतितेन सहाचरन्। एकयानभोजनासनशयनैर्यौनस्रौवमुख्यैस्तु सद्य एवेति। अत्रैकशब्दः शयनान्तैः सम्बद्ध्यते। एकभोजनमेकपङ्क्तिभोजनम्। एकशयनमेकस्यां शय्यायां तेन सह शयनम्। स्रौवं स्रुक्साध्यं याजनम्। मुख्यं मुखभवमध्यापनम्। अत्र मुख्यग्रहणमेकपात्रभोजनरूपसहभोजनस्योपलक्षणम्। अत एव देवलः—

याजनं योनिसम्बन्धं स्वाध्यायं सहभोजनम्।
कृत्वा सद्यः पतत्येव पतितेन न संशयः॥

यान्ययोऽपि पृथक् कृत्वा तत्पापं नाप्नुयात्क्वचित् ।
पृथक् भूतोऽपि संयोगाद्भजते दोषतुल्यतामिति ॥

अत्र सहभोजनमेकपात्रभोजनम् , न त्वेकपङ्क्तिभोजनम् । अत्र विनिगमकं व्यवहिताव्यवहितसम्बन्धत्वमेव । अत्र यानग्रहणं भोजनासनशयनानामुपलक्षणम् । एतेन मनुवाक्ये याजनाध्यापनायौनादिति सद्यः पातित्यहेतुषु यौनपदमपि सहभोजनस्योपलक्षणम् । तेनात्र सर्वेषां वाक्यानामयमर्थः—एकयानभोजनशयनासनानि पतितेन सह कुर्वन् संवत्सरेण पतति । याजनाध्यापनविवाहसम्बन्धसहभोजनानि कुर्वन् सद्य एवेति । अत्र च "एभिस्तु संवसेद्यो वै वत्सरं सोऽपि तत्समः ।" इति याज्ञवल्क्यवचने वत्सरमित्यत्यन्तसंयोगवाचिन्या द्वितीयायाः श्रवणात् यानादिचतुष्टयस्य संवत्सरं निरन्तराभ्यासे पातित्यहेतुत्वमित्यवगन्तव्यम् ।

देवलेन तु स्पष्टमेवोक्तम्—

संवत्सरेण पतति पतितेन सहाचरन् ।
भोजनासनशय्यादि कुर्वाणः सार्वकालिकम् ॥

इति । तेन संवत्सरमध्ये दिनमात्रान्तरेणापि दिनान्तरमादाय यदा षष्ट्यधिकशतत्रयदिवसव्यापित्वं संसर्गस्य भवति, तदेव महापातकहेतुत्वम् , अन्यथा तु निषिद्धत्वेन पापजनकत्वमिति विवेकः । अत्र पूर्वोदाहृतबृहद्विष्णुवाक्ये एकयानभोजनासनशयनैरिति द्वन्द्वात्परया तृतीयया इतरेतरयुक्तानामेवैकयानादीनां पातित्यहेतुत्वम् , प्रत्येकन्तु—

आसनाच्छयनाद्यौनात्सम्भाषात्सहभोजनात् ।
संक्रामन्ति हि पापानि तैलबिन्दुरिवाम्भसि ॥
संलापस्पर्शनिश्वाससहयानासनाशनात् ।
याजनाध्यापनाद्यौनात्पापं संक्रामते नृणाम् ॥

इत्यादिभिः पराशरादिवचनैर्निरपेक्षाणामपि पापहेतुत्वावगमात्पापहेतुत्वम् ; न तु पातित्यहेतुत्वम्। अस्मिन्नेव वचने यौनस्रौवमुख्यैरिति द्वन्द्वनिर्देशे सत्यपि प्रत्येकमेव यौनादीनां सद्यःपतनहेतुत्वम्। यः पतितैः सह यौनमुख्यस्रौवाणां सम्बन्धानामन्यतमं सम्बन्धं कुर्यात्, तस्याप्येतदेव प्रायश्चित्तमिति सुमन्तुवचनादित्युक्तं विज्ञानेश्वराचार्यैर्मिताक्षरायाम्। यत्तु—

"षाण्मासिके तु संसर्गे याजनाध्यापनादिना।
एकत्रासनशय्याभिः प्रायश्चित्तार्धमाचरेत्॥"

इति बृहस्पतिना याजनाध्यापनयौनैकपात्रभोजनैः षण्माससंसर्गे पातित्यमुक्तम्, तदकामतोऽत्यन्तापदि पञ्चमहायज्ञादिमात्रयाजने पूर्वोक्त एव विषयेऽङ्गाध्यापने दुहितृभगिनीव्यतिरिक्तव्यवहितयौनसम्बन्धे वेदितव्यम्। अन्यथा पूर्वोदाहृतैर्याजनादीनां सद्यः पातित्यहेतुत्वप्रतिपादकैर्वचनैर्विरोधः स्यात्। यौनसंसर्गविशेषे दोषाभावमाह याज्ञवल्क्यः—कन्यां समुद्वहेदेषां सोपवासामकिञ्चनामिति। एषां पतितानां कन्यां पतितापत्यायामुत्पन्नामकिञ्चनामलङ्कारादिपितृधनरहिताम्। अत्र विशेषमाह वृद्धहारीतः—

पतितस्य कुमारीं विवस्त्रामहोरात्रमुपोषितां प्रातः शुक्लेनाहतेन वाससाऽऽच्छादितां नाहमेतेषां न ममैते इति त्रिरुच्चैरभिदधानां तीर्थे स्वगृहे वोद्वहेदिति॥ अत्र तीर्थे स्वगृहे वोद्वहेदित्यनेन त्यक्तपतितसंसर्गां कन्यां स्वयमेवोद्वहेन्न तु पतितहस्तात्प्रतिगृह्णीयादिति दर्शयति। याज्ञवल्क्यवचने कन्यां समुद्वहेदिति वचनात् कन्याव्यतिरिक्तपतितापत्यस्य संसर्गानर्हता विज्ञायते। अत एव वसिष्ठः—पतितोत्पन्नः पतितो भवत्यन्यत्र स्त्रियाः, सा हि परगामिनी, तामरिक्थामुपेयादिति। तदेवं ब्रह्महत्या सुरापानं ब्राह्मणसुवर्णस्तेयं गुर्वङ्गनागमनमेभिः प्रत्येकं पूर्वोक्तसंसर्गश्चेति पञ्चमहापातकानि मनुनोक्तानि। तत्र त्रैवर्णिकानां सुरापाननिषेधात् शूद्रस्य

सुरापाननिषेधाभावात् सुरापानं त्रैवर्णिकानामेव महापातकं न शूद्रस्य। अन्यानि तु 'ब्राह्मणो न हन्तव्यः' इत्यादीनि मनुष्यमात्राधिकारेण निषेधस्य प्रवृत्तत्त्वान्मनुष्यमात्रस्य महापातकानि—इति ॥

अत्रानुसन्धेया मिताक्षरा त्वियमेव। सा यथा—

संसर्गश्च स्वनिबन्धनकर्मभेदादनेकधा भिद्यते। यथाह वृद्धबृहस्पतिः। "एकशय्यासनं पङ्क्तिर्भाण्डपक्वान्नमिश्रणम्। याजनाध्यापने योनिस्तथा च सहभोजनम्॥ नवधा संकरः प्रोक्तो न कर्तव्योऽधमैः सहेति। देवलोऽपि—संलापस्पर्शनिःश्वाससहयानासनाशनात्। याजनाध्यापनाद्यौनात्पापं संक्रमते नृणामिति। एकशय्यासनमेकखट्वासनमेकपङ्क्तिभोजनमेकभाण्डपक्वमन्नेन मिश्रणं संसर्गस्तदीयान्नभोजनमिति यावत्। याजनं पतितस्य स्वेन स्वस्य वा तेन। अध्यापनं तस्य स्वेन स्वस्य वा तेन। यौनं तस्मै कन्यादानं तत्सकाशाद्वा कन्यायाः प्रतिग्रहः। सहभोजनमेकामत्रभोजनम्। संलापः संभाषणम्। स्पर्शो गात्रसंमर्दः। निःश्वासः पतितमुखवायुसम्पर्कः। सहयानमेकतुरगाद्यारोहणम्। एतेषां मध्ये केन कर्मणा कियता कालेन पातित्यमित्यपेक्षायां वृद्धविष्णुनोक्तम्—संवत्सरेण पतति पतितेन सहाचरन्। एकयानभोजनासनशयनैर्यौनस्रौवमुख्यैस्तु सम्बन्धैः सद्य एवेति'।

अत्रैकभोजनमेकपङ्क्तिभोजनम्। एकपात्रभोजने तु सद्यः पातित्यम्। "याजनं योनिसम्बन्धं स्वध्यायं सहभोजनम्। कृत्वा सद्यः पतत्येव पतितेन न संशयः" इति देवलस्मरणात्। स्रौवशब्देन याजनमभिधीयते। मुख्यशब्देन मुखभवत्वेनाध्यापनम्। यौनस्रौवमुख्यैरिति सत्यपि द्वन्द्वादिनिर्देशे प्रत्येकमेव तेषां सद्यः पतनहेतुत्वम्। 'यः पतितैः सह यौनमुख्यस्रौवाणां सम्बन्धानामन्यतमं सम्बन्धं कुर्वीत, तस्याप्येतदेव प्रायश्चित्तमिति सुमन्तुस्मरणात्।

एकयानादिचतुष्टयस्य तु समुदितस्यैव पतनहेतुत्वम्; एकयानभोजनासनशयनैरिति इतरेतरयुक्तानां निर्देशात्। प्रत्येकानुष्ठानस्य तु पतनहेतुत्वाभावेऽपि दोषहेतुत्वमस्त्येव। "आसनाच्छयनाद्यानात्संभाषात्सहभोजनात्। संक्रामन्ति हि पापानि तैलबिन्दुरिवाम्भसीति" पराशरवचनेन निरपेक्षाणामपि पापहेतुत्वावगमात्। संलापस्पर्शनिःश्वासानां तु यानादिचतुष्टयेनानुषङ्गिकतया समुचितानामेव पतनहेतुत्वम्, न पृथग्भूतानामल्पत्वात्। पापहेतुत्वं पुनरस्त्येव; संलापस्पर्शनिःश्वासेति केवलवचनस्य दर्शितत्वात्। अतः संलापादिरहिते सहयानादिचतुष्टये कृते पञ्चमभागोनं द्वादशवार्षिकं कुर्यात्। तत्सहिते तु पूर्णम्। एवं च सति "एभिस्तु संवसेद्यो वै वत्सरं सोऽपि तत्समः" इति योगीश्वरवचनमपि सहयानादिचतुष्टयपरमेव युक्तम्। अतः संलापादीनां पृथक्पातित्यहेतुत्वं नास्ति। अत एव मनुना—"संवत्सरेण पतति पतितेन सहाचरन्। याजनाध्यापनायौनान्न तु यानासनाशनादि"ति यानादिचतुष्टयस्यैव संवत्सरेण पातित्यहेतुत्वमुक्तम् ( अ० ११ श्लो० १८० )। अत्रासनग्रहणं शयनस्याप्युपलक्षणम्।

अत्र च 'संवत्सरेण पतति पतितेन सहाचरन्। यानासनाशनादि'ति व्यवहितेन सम्बन्धः; प्राग्दर्शितविष्णुवचनानुरोधात्, तथा "संवत्सरेण पतति पतितेन सहाचरन्। भोजनासनशय्यादि कुर्वाणः सार्वकालिकमिति' वचनाच्च। न चानन्वयदोषः; यानासनाशनादिहेतोराचरन्नाचारं कुर्वन्निति भेदविवक्षया सम्बन्धोपपत्तेः। यथा एतया पुनराधेयसंमितयेष्ट्येति। यद्वा आचरन्निति शत्रा हेत्वर्थस्य गमितत्वात्। यानासनाशनादिति द्वितीयार्थे पञ्चमी। याजनाध्यापनायौनान्न तु संवत्सरेण पतति, किंतु सद्य एव; प्राचीनवचननिचयानुरोधादेव। अतो यौनादिचतुष्टयेन सद्यः पतति, यानादिचतुष्टयेन संवत्सरं निरन्तराभ्यासेनेति युक्तं

'वत्सरं सोऽपि तत्समः' इति । अत्यन्तसंयोगवाचिन्या द्वितीयाया दर्शनादन्तरितदिवसगणना कार्या । यथा षष्ट्यधिकशतत्रयदिवसव्यापित्वं संसर्गस्य भवति, ततो न्यूने तु न पतितप्रायश्चित्तम्, किं त्वन्यदेव । यथाह पराशरः—

"संसर्गमाचरन्विप्रः पतितादिष्वकामतः ।
पञ्चाहं वा दशाहं वा द्वादशाहमथापि वा ॥"
"मासार्धं मासमेकं वा मासत्रयमथापि वा ।
अब्दार्धमेकमब्दं वा भवेदूर्ध्वं तु तत्समः ॥"
"त्रिरात्रं प्रथमे पक्षे द्वितीये कृच्छ्रमाचरेत् ।
चरेत्सान्तपनं कृच्छ्रं तृतीये पक्ष एव तु ॥
"चतुर्थे दशरात्रं स्यात्पराकः पञ्चमे ततः ॥
षष्ठे चान्द्रायणं कुर्यात्सप्तमे त्वैन्दवद्वयम् ॥
अष्टमे च तथा पक्षे षण्मासान्कृच्छ्रमाचरेदिति ॥"

कामतः संसर्गे पुनर्विशेषः स्मृत्यन्तरेऽभिहितः । सुमन्तुः—"पञ्चाहे तु चरेत्कृच्छ्रं दशाहे तप्तकृच्छ्रकम् । पराकस्त्वर्धमासे स्यान्मासे चान्द्रायणं चरेदिति ॥ मासत्रये प्रकुर्वीत कृच्छ्रं चान्द्रायणोत्तमम् । षाण्मासिके तु संसर्गे कृच्छ्रं त्वब्दार्धमाचरेत् ॥ संसर्गे त्वाब्दिके कुर्यादब्दं चान्द्रायणं नरः ॥' इति । अत्र चाब्दिके संसर्गे इति किञ्चिद् न्यून इति द्रष्टव्यम्; पूर्णे तु वत्सरे मन्वादिभिर्द्वादशवार्षिकस्मरणात् । यत्तु बार्हस्पत्यवचनम्—"षाण्मासिके तु संसर्गे याजनाध्यापनादिना । एकत्रासनशय्याभिः प्रायश्चित्तार्धमाचरेदिति । याजनाध्यापनयानैकपात्रभोजनानां षण्मासात्पातित्यवचनम्, एतदकामतोऽत्यन्तापदि पञ्चमहायज्ञादिमात्रे याजनेऽङ्गाध्यापने दुहितृभगिनीव्यतिरिक्ते च योनिसम्बन्धे द्रष्टव्यम्; प्रकृष्टयाजनादिभिः सद्यः पातित्यस्योक्तत्वात् ॥

यत्तु सुमन्तुः—"चण्डालान्त्यस्त्रियो गत्वा भुक्त्वा च प्रतिगृह्य च । पतत्यज्ञानतो विप्रो ज्ञानात् साम्यं तु गच्छति ॥" इति, अत्राज्ञानात् सकृत् चण्डालस्त्रीगमनेऽष्टाचत्वारिंशद्भोजने च द्वादशाब्दम्, ज्ञाने तत्समत्वाद् द्विगुणप्रायश्चित्तेऽप्यव्यवहार्यतेति वदतां कमलाकरभट्टानां प्रायश्चित्तरत्नकाराणां तु इदमेव मतमवगम्यते, यत् यत्र यत्र तत्समत्वाभिधानम्, तत्र तत्र कृतप्रायश्चित्तानामपि न व्यवहार्यत्वमिति। तथाच "कामतो व्यवहार्यस्तु वचनादिह जायते" इति वचने व्यवहार्य इति पदच्छेदपक्षेऽपि यत्र न म्लेच्छादिसमत्वम्, तत्रैव प्रवृत्तिः, न पापसामान्ये, इति कृतप्रायश्चित्तानामपि मतान्तरप्रविष्टानां यावन्न म्लेच्छसमत्वम्, तावदेव व्यवहारयोग्यता। तदनन्तरं यावत् प्रायश्चित्तविधिविषयता, तावत्—बौधायनवचनानुसारेण परस्परं यजनयाजनादिसम्बन्धः, अनन्तरं तु न स्वकर्माधिकारोऽपीति मन्तव्यम्। अत्र हि मते 'चतुर्थे नास्ति निष्कृतिरि''त्यस्य द्विवारं ज्ञानकृतपातित्ये न प्रायश्चित्तयोग्यतापीत्यत्रैव तात्पर्यं विवक्षितम्। तथाच मतान्तरं प्रविष्टा अज्ञानात्, मोहात् बलात्कारेण छलाद्वा यदि म्लेच्छस्त्रीसङ्गं विना, तत्राष्टाचत्वारिंशदधिकवारभोजनं विना च स्वमतप्रवेशं काङ्क्षन्ति, तर्हि स्वपूर्वतनजातिप्रवेशो भवितुमर्हत्येवेति प्रतिभाति। अयमेव पक्षः शूलपाणेरपि संमतः।

यत्तु मिताक्षरादिषु षष्ठ्यधिकत्रिशतदिवसपर्यन्तमभ्यासेऽपि न पातित्यापादकत्वं सहासनाशनशयनानामिति निरूपितम्, तत्र सहाशनशब्देनैकपङ्क्तिभोजनस्यैव विवक्षणादत्र चैकामत्रभोजनस्यैव विवक्षितत्वान्न विरोधः। अत्रापि पक्षे एकामत्रभोजनेन सद्यः पातित्यमिति यन्मिताक्षरायामुक्तम्, तदिदमपि अज्ञान एवावृत्तिनिमित्तत्वम्, न तु ज्ञाने, इति सकृदेकामत्रभोजनेऽपि पातित्यस्वीकरणे न विरुद्धं भविष्यति।

अष्टाचत्वारिंशद्वारभोजनावृत्तौ द्वादशाब्दमिति प्रायश्चित्त-रत्नाकरव्यवस्था तु चण्डालपक्वान्नविषयैव, न तु तत्सहभोजना-दिविषया। तत्र तु मिताक्षरादिसिद्धान्त एव तेषामपि सम्मतः। नहि—"चण्डालान्त्यस्त्रियो गत्वा भुक्त्वा च प्रतिगृह्य चे"ति वचने तत्सहभोजनैकभोजनादिविवक्षा समस्ति। तथाच साधारणसह-भोजनादिकमेकसंवत्सरपर्यन्तमपि पतितैस्सह न पातित्यापाद-कमिति सिद्धम्।

अत्रेदमेवालोचनीयम्—यत् कथमष्टाचत्वारिंशत्संख्याया अत्र विवक्षेति। अत्र श्रीमदाशुतोषशिरोरत्नमहोदया एवं मन्यन्ते-यत् "चण्डालान्त्यस्त्रियो गत्वा भुक्त्वा च प्रतिगृह्य च। पातित्यं ज्ञानतोऽज्ञानादि"ति पातित्याभिधानात्—षड्भिर्वर्षैः कृच्छ्रचारी ब्रह्महा तु विशुध्यते" इति वचनानुसारेण षडब्दकृच्छ्रप्रायश्चित्त-स्यैवाशीत्युत्तरधेनुप्रत्याम्नायकत्वानुष्ठेयत्वात्, एवं सकृच्चण्डा-लान्नभक्षणे—"रजकव्याधशैलूषवेणुचर्मोपजीविनः। एतेषां यस्तु भुञ्जीत द्विजश्चान्द्रायणं चरेत्।" इति सकृद्भक्षणे एकचान्द्रायणे सार्धसप्ततिधेनुप्रत्याम्नायकेऽष्टाचत्वारिंशच्चान्द्रायणानां द्वादशा-ब्दसमानकत्वस्यैव वक्तव्यत्वाद्वा सर्वोपपत्तिरिति। अत्र प्रथमोपपत्तौ—अज्ञानतोऽष्टाचत्वारिंशद्भोजने द्वादशाब्दमित्यस्य षडब्दकृच्छ्रपरत्वे यद्यपि क्लिष्टा कल्पना, द्वितीयोपपत्तौ तु न सापि समस्ति। सर्वथा तु—अज्ञानतोऽपि अष्टाचत्वारिंशदधिकभोजने ज्ञानतश्चतुर्विंशत्यधिकभोजने वा न व्यवहारयोग्यता मतान्तरम-विष्टानां कृतप्रायश्चित्तानामपी"ति। तदुक्तं प्रायश्चित्तरत्ने कमला करभट्टकृते—ज्ञाने तु तत्समत्वाभिधानात् द्विगुणप्रायश्चित्ते व्यवहार्यतेति।

यत्तु पुनर्मिताक्षरायाम्—तत्र मत्यभ्यासे तु प्रतिनिमित्तं नै-मित्तिकावृत्तिरिति न्यायात् प्रतिनिमित्तं नैमित्तिकावृत्तौ प्रस-

ख्यायां लौगाक्षिणा विशेष उक्तः, "अभ्यासेऽहर्गुणा वृद्धिर्मासादर्वाग् विधीयते। ततो मासगुणा वृद्धिर्यावत्संवत्सरं भवेत्। ततः संवत्सरगुणा यावत्पापं समाचरेत्।" इति। इदं मतिपूर्वविषयमिति—वर्णितम्। तदिदं विष्णुस्मृतिव्याख्यायां नन्दपण्डितकृतायां वैजयन्त्याख्यायामभ्यासेऽहर्गुणा वृद्धिरित्यस्य विशिष्य वेश्यास्त्रीगमनपरत्वस्यैवोरीकृतम्। मिताक्षरायामपि—"साधारणस्त्रीसंभोगे तु हीनयोनिनिषेवणमित्युक्तम्। तत्रापि—पशुवेश्याभिगमने प्राजापत्यं विशोधनम्" इति संवर्तोक्तमकामतो द्रष्टव्यम्। कामतस्तु यमेनोक्तम्—"वेश्यागमनजं पापं व्यपोहन्ति द्विजातयः। पीत्वा सकृत् सकृ तप्तं सप्तरात्रं कुशोदकम्"—इत्युक्त्यनन्तरमेवेममेव विषयमधिकृत्येदं लौगाक्षिवचनं प्रवृत्तम्। तथाचोक्तवचनानुसारेण बहुकालाभ्यासेऽपि प्रायश्चित्तन्यूनतावादनं केषांचन परास्तम्।

एतेन—म्लेच्छादिस्त्रीगमनमपि—व्याख्यातम्। तदपि हि साधारणं विशिष्टमिति द्विविधम्। तत्र साधारणेन न सद्यः पातित्यम्, किन्तु बहुकालाभ्यास एव। तदुक्तं मिताक्षरायाम्—"चण्डालान्त्यस्त्रियो गत्वा भुक्त्वा च प्रतिगृह्य च। पतत्यज्ञानतो विप्रो ज्ञानात्साम्यं तु गच्छति।" इति। चण्डालादिसाम्यं प्रतिपादयता मनुनाऽपि कामतोऽत्यन्ताभ्यासे मरणान्तिकं दर्शितम्। तथा ह्यज्ञानतश्चाण्डालीगमनाभ्यासे पतितः, पतितप्रायश्चित्तं द्वादशवार्षिकं कुर्यात्। कामतोऽत्यन्ताभ्यासे चण्डालैः साम्यं गच्छति। अतो द्वादशवार्षिकाधिकं मरणान्तिकं कुर्यात्। एतच्च बहुकालाभ्यासविषयम्। एकरात्राभ्यासे तु वर्षत्रयम्। यथाह मनुः (अ० ११ श्लो० १७८) "यत्करोत्येकरात्रेण वृषलीसेवनं द्विजः। स भैक्ष्यभुग्जपन्नित्यं त्रिभिर्वर्षैर्व्यपोहतीति।" अत्र वृषलीशब्देन चण्डाल्यभिधीयते; "चण्डाली बन्धकी वेश्या रजःस्था या च कन्यका। ऊढा या च सगोत्रा स्याद् वृषल्यः पञ्च कीर्तिताः" इति स्मृत्यन्तरे

वृषलीशब्दप्रयोगदर्शनात्। बन्धकी स्वैरिणी। कथं पुनरत्राभ्यासागमः ? उच्यते ; 'यत्करोत्येकरात्रेण' इत्यत्यन्तसंयोगवाचिन्यास्तृतीयाया दर्शनात्, एकरात्रेण चात्यन्तसंयोगो गमनस्याभ्यासं विनाऽनुपपन्न इति गमनाभ्यासोऽवगम्यते। अत एवैकरात्राद् बहुकालाभ्यासविषयं प्रागुक्तं द्वादशवर्षादि गुरुतल्पव्रतातिदेशिकं मरणान्तिकं च। यदा पुनर्ज्ञानतोऽज्ञानतो वा चाण्डाल्याद्याः सकृद्गच्छन्ति, तदा "चाण्डालपुल्कसानां तु भुक्त्वा गत्वा च योषितम्। कृच्छ्राब्दमाचरेज्ज्ञानादज्ञानादैन्दवद्वयमिति" यमाद्युक्तं संवत्सरं कृच्छ्रानुष्ठानम्। अमत्या चान्द्रायणद्वयं यथाक्रमेण द्रष्टव्यम्।

अत्र चण्डाल-म्लेच्छयोरयं विशेषः--यत् म्लेच्छाः माहम्मदादयः कर्मणा पतिताः, न तु जातितः; म्लेच्छानां प्रतिलोमसंकरत्वाभावात्। अतो महाभाष्यं 'शूद्राणामनिरवसितानामि' ति सूत्रे ग्रामाद्-निरवसितत्वात् म्लेच्छयवनमिति प्रयोगसाधुतोपपादितोपपद्यते। एतेन माहम्मदादीनां ग्रामे प्रवेशो चण्डालानां कथं न प्रवेश इति अधुनातनानामाक्षेपोऽपि—परास्तः। पतितस्य ग्रामतोऽपि निष्कासनं हि त्रेतायुगविषयम्। तदुक्तं त्रेतायां ग्राममुत्सृजेदिति। कलौ हि न म्लेच्छानां पतितानां ग्रामपरित्यागः प्रतिषिद्धः। स्पष्टं चैतत्पूर्वमेव विवेचितम्, यत्—पराशराचार्यैश्चण्डालविषये संभाषणस्यापि निषेधात्, चण्डालादिजातिपातित्येन न्यूनताकल्पनं न तत्सम्मतमिति। एवं च 'कर्तारं तु कलौ युगे' इति वदन्त एव पराशराचार्याश्चण्डालदर्शनादावपि प्रायश्चित्तविधानेन धर्मपतितानां विषय एव दोषन्यूनताकल्पनं संभवतीति मन्यन्ते, न जातिपतितविषय इति स्पष्टमेव सूचयन्तीति व्यर्थमेवेदमान्दोलनं माहम्मदादिदृष्टान्तेन चण्डालादिस्पृश्यतोपपादनार्थम्। एवं वदतामस्माकं माहम्मदादिभ्यः एकत्र निकर्षेऽपि अस्मदीयशास्त्रा-

धिकारितया व्यवहारे तेषामुत्कर्षो न नाभिमन्यते । इदमेवाभिमतमस्माकम्—यन् स्वधर्मश्रद्धालूनामेतेषां धर्मे श्रद्धा यथा स्यात्, यथा च पराणां प्रतारणपारवश्यं न स्यात्, तथा करणार्थं सर्वैरपि यतितव्यमेव, नतु माहम्मदादिमतप्रवेशो मा भूदिति ग्रामादिषु प्रवेशव्यवस्थापनायाल्पेनोत्कोचेन व्यवहर्तव्यमिति । उत्कोचस्य हि काष्ठा निरवधिरेवेति सर्व एव विजानन्तीति नात्र विस्तरीतुमिच्छामः ।

तत्र कश्चित्—सिद्धायां खल्वापदि तदनुसृत्या धर्मपरिवर्तनेन म्लेच्छचाण्डालदस्युभिर्बलाद्दासीकृतानामत एव पतितानां पतिसंसर्गात्स्वेच्छया वा पतितानां सर्वेषां पुनरपि हिन्दुधर्मे स्वीकारोऽप्यावश्यकः । स चायम्परिग्रहः कृतप्रायश्चित्तानां वाऽकृतप्रायश्चित्तानां वा सर्वेषामपि यदि स्वधर्मानुष्ठानेच्छा, तदैव, न तु बलात्कारेण । देवलस्मृतौ तु "बलाद्दासीकृता ये च म्लेच्छचण्डालदस्युभिरि"त्यादिश्लोकैः परधर्मे प्रविष्टानामपि पुनरपि स्वधर्मे संग्रहस्त्वनुमत एवेति तत्रैव समाहृत्य समीक्षणीयम् । अत्र च यद्यपि बलादितिपदाद् बलात्कारेण परिभ्रष्टानामेव संग्रहोऽनुमतः, न तु छलादिभिः परिभ्रष्टस्येति समुदेत्याकाङ्क्षा । परन्तु बौधायनेनोक्तस्य—

बलादपहृता कन्या मन्त्रैर्यदि न संस्कृता ।
अन्यस्मै विधिवद्देया यथा कन्या तथैव सा ॥

इति वचनस्य विवरणावसरे पारस्करगृह्यसूत्रस्य प्रथमकाण्डान्तर्गतायामष्टमकण्डिकायां तद्विवरणानुपङ्गेण बलादिति छलादेरप्युपलक्षणमित्युक्तम्; तद्वदत्रापि बलादित्युपलक्षणं छलादेरिति स्वीकारे न कोऽपि दोषः । एवंच परधर्मे प्रविष्टानामत एव पतितानां पुनरपि संग्रहो न्याय्यः । न च प्रायश्चित्तानन्तरमेव संग्रहोऽनुमत इति वाच्यम्; नहि प्राय-

स्यात्। किञ्च नष्टे मृते इति वाक्यस्य विवाहानन्तरपतिनाशादिविषयत्वे "धार्या सा वर्षमेकन्तु देयाऽन्यस्मै विधानतः"—इति केनचन निमित्तेन देशान्तरं गत्वा अवृत्तान्तो यैर्वत्सरं यावन्न निवेदितस्तदीया भार्याः सर्वा अप्यन्यस्मै देया इति विवक्षणीयम्। तथाच पत्युः प्रोषितस्याविदितवृत्तान्तस्य द्वादशवर्षपर्यन्तं प्रतीक्षणं संस्कारादिकरणार्थं कर्तव्यमित्यादिसिद्धान्ता व्याकुप्येरन्। तथाच नष्टे मृते इति वाक्यं न कथमपि पुनर्विवाहस्य विधवानामूढानां प्रोषितभर्तृकाणां वा साधकम्। एवं व्याख्यानेन हि उत्तरश्लोकयोरपि समन्वयोऽतिसरसो भवति। ताविमावुत्तरश्लोकौ—

"मृते भर्तरि या नारी ब्रह्मचर्यव्रते स्थिता।
सा मृता लभते स्वर्गं यथा ते ब्रह्मचारिणः॥
तिस्रः कोट्योऽर्धकोटी च यानि लोमानि मानुषे।
तावत्कालं वसेत्स्वर्गे भर्तारं याऽनुगच्छति॥"

इति। अत्र श्लोकद्वये एव मृतभर्तृकाया ब्रह्मचर्यानुगमनाभ्यामेव फलविशेषाम्नानम्, न तु पूर्वस्मिन् श्लोके पत्यन्तरविधानेन फलविशेषोऽपि। तथाच मृतभर्तृकायाः कर्तव्यद्वयमेव फलवत्तात्पर्येणावगम्यते, न तु कर्तव्यत्रयमपि; पूर्वत्र फलाश्रवणात्। अन्यथा देशान्तरगमनेऽपि मृतस्य इव ब्रह्मचर्यव्रतं न स्यात्, इति प्रोषितभर्तृकाया अब्रह्मचर्यमपि न दोषाय स्यात्। अस्मन्मते तु वाग्दत्ताया ब्रह्मचर्यव्रतभङ्गस्यैवाप्रौढाया असम्भवान्न कोऽपि दोषः। यथा चर्तुमतीविवाहो न शास्त्रीयः तथाऽवसरान्तरे निरूपयिष्यामः। यदि त्वत्र मृते भर्तरीति नष्टत्वादीनामुपलक्षणमिति मन्यते, तर्हि तु मृते भर्तरीति व्यर्थमापद्येत। प्रकरणेनैव लाभात्। तथाच पूर्ववाक्यस्य नष्टत्वादिनिमित्तकपत्यन्तरविधानपरत्वमुत्तरवाक्यद्वयस्य मृतभर्तृकत्वनिमित्तकसफलब्रह्मचर्यादिविधिपरत्वमित्यङ्गीकर्तव्यमिति पूर्वत्र पतिशब्दस्योत्तरत्र भर्तृशब्दस्येति शब्द-

प्रयोगसार्थक्यार्थमपि वाग्दानानन्तरं पतिविषयत्वं पूर्ववाक्यस्योत्तरत्र मुख्यपतिविषयकत्वमित्येवोरीकृते संभवति। अत्र जीवानन्दविद्यासागरमहोदयैः श्लोकत्रयेण कर्तव्यत्रयं बोधितमिति विवाहान्तरविधवाया विवाहोऽपि पराशरस्मृतिसम्मत इति यद् व्यवस्थापितम्, तदिदं स्मृत्यक्षराननुगुणमिति मन्तव्यम्। इदमेवाभिप्रेत्य विद्वन्मनोहरायाम्—नन्वस्तु वाग्दानानन्तरं विवाहात् प्राक् पूर्वपतिनाशे पत्यन्तरविधानम्, विवाहानन्तरं तु तन्नाशे कथं कार्यमित्यत आह—मृते इति—इत्युक्तश्लोकावतरणं कृतम्। यत्तु माधवीये—पुनरुद्वाहमकृत्वा ब्रह्मचर्यव्रतानुष्ठानात् श्रेयोतिशयं दर्शयति मृते भर्तरि—इति, मृतग्रहणं नष्टादीनामुपलक्षणमिति वर्णितम्। तस्य विवाहानन्तरं पत्युर्देशान्तरगमनाभिप्रायत्वमेव युक्तम्; अन्यथा भर्तरीतिपदान्तरप्रयोगवैयर्थ्यात्। एतेन—अन्यत्रैव पुनरुद्वाहस्याप्राप्यङ्गीकृतत्वादिति पूर्वतनश्लोकोपसंहारोऽपि व्याख्यातः; तस्यापि वाग्दानोत्तरविवाहपरत्वात्। न ह्येकोऽपि निबन्धकारः प्राचीनो विवाहानन्तरं विधवायाः पुनरुद्वाहं साधयति, प्रत्युत सर्व एव मन्वादिव्याख्यानेषु तत्तत्स्मृतिषु च बहुशो निन्दन्तीति विवाहानन्तरविधवापुनरुद्वाहो न प्रामाणिकः। एतच्च माधवीयवाक्ये युगान्तरविषय इति पाठं कल्पयित्वैव सङ्गच्छत इति।

माधवीयवाक्यस्य युगान्तरविषयः इत्येवमाकारत्वमादाय केचित् पुनरुद्वाहोऽयं युगान्तरविषयः, तथा चादिपुराणमिति यथाश्रुतरीत्यैव योजयन्ति।

तदेवम् "अनन्यपूर्विकाम्" इत्यस्य अन्यपूर्विकाया विवाहस्य प्रतिषेध्यत्वस्यैव स्वाकरणीयत्वात् विशिष्य कलौ ब्राह्मणानां स निन्द्य इति तेनापि न भार्यात्वं सिध्यति।

अत्र प्रसङ्गादपराण्यपि वर-कन्याविशेषणानि विचारयामः। इमानि तत्र याज्ञवल्क्यवचनानि—

"अविप्लुतब्रह्मचर्यो लक्षण्यां स्त्रियमुद्वहेत्।
अनन्यपूर्विकां कान्तामसपिण्डां यवीयसीम्।
अरोगिणीं भ्रातृमतीमसमानार्षगोत्रजाम्।
पञ्चमात्सप्तमादूर्ध्वं मातृतः पितृतस्तथा।
दशपुरुषविख्याताच्छ्रोत्रियाणां महाकुलात्।
स्फीतादपि न संचारिरोगदोषसमन्वितात्।
एतैरेव गुणैर्युक्तः सवर्णः श्रोत्रियो नरः।
यत्नात् परीक्षितः पुंस्त्वे युवा धीमान् जनप्रियः।" इति

अत्रेदमेवालोचनीयम्—किमत्र सर्वेषामुद्देश्यविशेषणानां विवक्षा, उत नेति। आद्येऽकान्तानामभ्रातृकाणां दशपुरुषपुरुषाविख्यात-श्रोत्रियकुलीनानाम्, अश्रोत्रियकुलीनानाम्, अस्फीतकुलानां च कन्यानां तादृशानां च वराणां विवाहः किमाशास्त्रीयः? सति चैवं महाननाश्वासः। ततश्च इविरार्त्यधिकरणन्यायेन ग्रहैकत्वाधिकरणन्यायेन वा यथासंभवमेव विशेषणानां विवक्षेति स्वीकर्तव्यम्। तथाच लक्षण्यादिसर्वगुणवैशिष्ट्ये मुख्यता, अन्यथा तु गौणता।

तत्रापि "नग्निकामि" ति अनागतार्तवाया विवक्षणेन प्राप्त-रजस्कानां निषेधोऽपि गम्यते, स तु न प्रसज्यप्रतिषेधः; यतो हि समानप्रवरादीनामिव न परित्यागो विधीयते, तथा विवाहानन्तर-मव्यवहार्यत्वं वा; किन्तु पर्युदास एव; तथाचर्तुमत्या अपि विवाहरूपाऽप्यनुष्ठानं क्षत्रियादौ गौणकल्पतया, ब्राह्मणेषु त्वाप-त्कल्पतया स्वीकर्तव्यम्। यतो ब्राह्मणस्य पितुः कन्यारजोदर्शनेऽ-पाङ्क्तेयत्वं प्रतिपाद्यते। वरकन्ययोस्त्वाश्वलायनोक्तप्रायश्चित्त-पूर्वकमुद्वहयोर्नापाङ्क्तेयत्वम्, न वा प्रायश्चित्तीयतेति न दोषः।

एतेन—यौवनानन्तरं विवाहोऽपि गौण एव; तत्रापि—

"पञ्चाशद्वत्सरादूर्ध्वं विवाहस्तु निषिध्यते।" इतिवचनानुसारेणा-पञ्चाशद्वत्सरपर्यन्तं स आपत्कल्पस्तथापि तावत्पर्यन्तमेव पुंसां विवहयोग्यता, नतु तदनन्तरमपि।

अयमत्र निष्कर्षः—ऋतुमत्या अपि विवाहो नायोग्यः, किन्त्वसौ जघन्यः।

तथाच गृह्यसंग्रहः—

नग्निकां तु वदेत्कन्यां यावन्नर्तुमती भवेत्।
ऋतुमती त्वनग्निका तां प्रयच्छेत्त्वनग्निकाम्॥

तुकारः पक्षान्तरे। नग्निका तु श्रेष्ठेति सूत्रयता गोभिलेन नग्निकायाः श्रेष्ठत्वमुक्तम्। तत्पुत्रस्तु अनग्निकां प्रयच्छेदिति पक्षान्तरमाह। श्रेष्ठपक्षादन्योऽयं पक्षो जघन्य इत्यर्थः। एवं चर्तुमत्या विवाहनिन्दावचनानि नग्निकाया विवाहप्राशस्त्यतात्पर्यकाणि। मीमांसाभाष्यकारैरप्युक्तम्—'न हि निन्दा निन्द्यं निन्दितुं प्रवर्त-तेऽपि तु इतरत् स्तौति'। अन्यदुपरिष्टाद्वक्ष्यामः। तथाच नारदः—

"कन्या नर्तुमुपेक्षेत बान्धवेभ्यो निवेदयेत।
ते चेन्न दद्युस्तां भर्त्रे ते स्युर्भ्रूणहभिः समाः॥
यावन्तश्चर्तवस्तस्याः समतीयुः पतिं विना।
तावत्यो भ्रूणहत्याः स्युस्तस्य यो न ददाति ताम्॥
अतः प्रवृत्ते रजसि कन्यां दद्यात्पिता सकृत्।
महदेनः स्पृशेदेनमन्यथैष विधिः सताम्॥"

इति ऋतोः परमपि दानं दर्शयति। भ्रूणहत्यावचनं निन्दार्थम्।

मनुः—

त्रीणि वर्षाण्युदीक्षेत कुमार्यृतुमती सती।
ऊर्ध्वं तु कालादेतस्माद्विन्देत सदृशं पतिम्॥

बौधायनः—

त्रीणि वर्षाण्यृतुमती काङ्क्षेत पितृशासनम् ।
ततश्चतुर्थे वर्षे तु विन्देत सदृशं पतिम् ॥
अविद्यमाने सदृशे गुणहीनमपि श्रयेत् ।
यत्तु विष्णुनोक्तम्—
'ऋतुत्रयमुपास्यैव कन्या कुर्यात्स्वयं वरम्' इति ।
तद्गुणवद्वरलाभे सति द्रष्टव्यमिति माधवाचार्याः ।
मनुः—
अदीयमाना भर्तारमधिगच्छेद्यदि स्वयम् ।
नैनः किञ्चिदवाप्नोति न च यं साधिगच्छति ॥
यमधिगच्छति सोऽपि न पापमाप्नोतीत्यर्थः ।
यमः—
एवं चोपनतां पत्नीं नावमन्येत्कदाचन ।
न तु तां मन्यकीं विद्यान्मनुः स्वायंभुवोऽब्रवीत् ॥
आश्वलायनः—
कन्यामृतुमतीं शुद्धां कृत्वा निष्कृतिमात्मनः ।
शुद्धिं च कारयित्वा तामुद्वहेदस्पर्शस्पर्शः ॥
पिता ऋतून् स्वपुत्र्यास्तु गणयेदादितः सुधीः ।
दानावधि गृहे यत्नात्पालयेच्च रजोवतीम् ॥
दद्यात्तदृतुसंख्या गाः शक्तः कन्यापिता यदि ।
दातव्यैकापि निःस्वेन दाने तस्या यथाविधि ॥
दद्याद्वा ब्राह्मणेष्वन्नं अतिनिस्वः सदक्षिणम् ।
तस्यातीतर्तुसंख्येषु वराय प्रतिपादयेत् ॥
उपोष्य त्रिदिनं कन्या रात्रौ पीत्वा गवां पयः ।
अदृष्टरजसे दद्यात्कन्यायै रत्नभूषणम् ॥
तामुद्वहन्वरश्चापि कूष्माण्डैर्जुहुयाद् घृतम् ।
शुद्धां निर्दोषामव्यभिचारिणीमिति यावत् । दाने दाननि-

मित्तम्। तस्यातीतेति विसर्गलोपे सन्धिरार्षः। अतीतर्तुसंख्येष्विति ब्राह्मणेष्वित्यनेनान्वेति। कन्याया यावन्त ऋतवोऽतीतास्तावत्संख्येषु ब्राह्मणेषु सदक्षिणमन्नं दत्त्वा तां वराय प्रतिपादयेदित्यर्थः। कन्यायाः शुद्धिप्रकारमाह—उपोष्येत्यादिना। कूष्माण्डैः=कूष्माण्डमन्त्रैः। ते च मन्त्राः 'यद्देवा देवहेलनमि'त्यादयस्तैत्तिरीयारण्यके पठिताः। एवं चर्तुमतीविवाहनिन्दावचनानि अन्यकृतप्रतीकारविषयाणि पर्यवस्यन्ति। मनुः—

अलंकारं नाददीत पित्र्यं कन्या स्वयंवरा।
मातृकं भ्रातृदत्तं वा स्तेना स्याद्यदि तं हरेत्॥
पित्रे न दद्याच्छुल्कन्तु कन्यामृतुमतीं हरन्।
स हि स्वाम्यादतिक्रामेदृतूनां प्रतिरोधनात्॥
अत्र लक्षण्यादिकन्यागुणानभिधायाह याज्ञवल्क्यः—
"एतैरेव गुणैर्युक्तः सवर्णः श्रोत्रियो वरः।
यत्नात्परीक्षितः पुंस्त्वे युवा धीमान् जनप्रियः।
एतदपि प्राशस्त्यार्थम्।
ब्राह्मणक्षत्रियविशां शूद्राणां च परिग्रहे।
सजातिः श्रेयसी भार्या सजातिश्च पतिः स्त्रियाः॥
इति नारदवचनात्।
दद्याद् गुणवते कन्यां नग्निकाम् ब्रह्मचारिणे।
अपि वा गुणहीनाय नोपरुन्ध्याद्रजस्वलाम्॥

इति बोधायनवचनाच्च। नग्निका=अनागतार्तवा। यत्तु मनुवचनम्, "काममामरणात्तिष्ठेद् गृहे कन्यर्तुमत्यपि। नचैवैनाम् प्रयच्छेत्तु गुणहीनाय कर्हिचित्" इति, तद् गुणवते दद्यादित्यस्य प्रशंसार्थम्, न तु ऋतुमत्या गृहावस्थानार्थम्; 'नोपरुन्ध्याद्रजस्वलामिति' बोधायनविरोधात्, वक्ष्यमाणवचनजाताच्च।

इदं हि पूर्वमुक्तम्—

उत्कृष्टायाभिरूपाय वराय सदृशाय च ।
अप्राप्तामपि तां कन्यां तस्मै दद्याद्यथाविधि ॥

इति । न हि काममामरणादित्यनेन ऋतुमत्या गृहे स्थितिर्विधीयते, किन्तु वरमृतुमत्यपि कन्या आमरणाद् गृहे तिष्ठेत्, नचैनां निर्गुणाय दद्यादिति गुणवते दानं स्तूयते । यथा—

वरं भक्ष्यमभक्ष्यं च पिबेद्वा गर्हितं च यत् ।
वर्जनीयं प्रयत्नेन मूलकं मदिरासमम् ॥

इत्यभक्ष्यभक्षणादिकं न विधीयते, किन्त्वभक्ष्यभक्षणादितोऽपि मूलकभक्षणं गर्हितमिति मूलकभक्षणं निन्द्यते, तथा ऋतुमत्या गृहेऽवस्थानादपि गुणहीनाय दानं गर्हितमित्यनेन गुणवते दानमेव स्तूयते । एवं च गुणहीनाय न दद्यादित्यपि गुणवत्प्रशंसार्थम् । "अपि वा गुणहीनाये' ति स्मरणात् । "नोपकन्ध्याद्रजस्वलामि"त्यपि नग्निकादानप्रशंसार्थम् । तथाच गुणवते नग्निका देयेति मनुयोधायनवचनयोरर्थः ।

अथैवम्—"वरश्चेत्कुलशीलाभ्यां न युज्येत कथञ्चन ।
न मन्त्राः कारणं तत्र न च कन्याऽनृतं भवेत् ॥
समाच्छिद्य तु तां कन्याम् बलादक्षतयोनिकाम् ।
पुनर्गुणवते दद्यादिति शातातपोऽब्रवीत् ॥"
इति शातातपेन,—
'हीनस्य कुलशीलाभ्यां हरन्कन्यां न दोषभाक् ।
न मन्त्राः कारणं तत्र न च कन्याऽनृतं भवेत् ॥

इति यमेन च गुणहीनाय दत्तां पुनराच्छिद्य गुणवते दद्यादित्युक्तं कथं सङ्गच्छत इति चेदेवं तर्हि मतभेदोऽस्तु । तथाच वरमृतुमत्यपि देया, तथापि गुणहीनाय न दातव्येति मनोर्मतम्, गुणहीनाय दत्ताऽप्याच्छिद्य पुनर्गुणवते देयेति शातातपादीनाम्

मतम्, वरम् गुणहीनाय देया, न जात्वपि ऋतुमती दातव्येति बोधायनस्य मतम्। अनन्यगतेर्वचनानाम् मुनीनां मतभेदस्य च बहुलमुपलम्भात्। मनोर्मतेऽपि ऋतुमत्या गृहेऽवस्थितिर्दोषायैवेति तद्वचनभङ्ग्यावगम्यते, परन्तु गुणहीनाय दाने ततोऽपि दोषातिशय इति तस्य मतं लक्ष्यते। विष्णुः—

यावच्च कन्यामृतवः स्पृशन्ति तुल्यैः सकामामपि याच्यमानाम्। तावन्ति भूतानि हतानि ताभ्याम् मातापितृभ्यामिति धर्मवादः॥ इति सकामां तुल्यैर्याच्यमानामिति विशेषणम् व्यतिरेकेणैव दोष इत्यभिप्रेतोत्यवगम्यते।

अथ विवाहकालः—संवर्तः—

रोमदर्शनसंप्राप्तौ सोमो भुङ्क्तेऽथ कन्यकाम्।
रजो दृष्ट्वा तु गन्धर्वः कुचौ दृष्ट्वा तु पावकः॥
अष्टवर्षा भवेद्गौरी नववर्षा तु रोहिणी।
दशवर्षा भवेत्कन्या अत ऊर्ध्वं रजस्वला।
माता चैव पिता चैव ज्येष्ठो भ्राता तथैव च।
त्रयस्ते नरकं यान्ति दृष्ट्वा कन्यां रजस्वलाम्॥
तस्माद्विवाहयेत्कन्यां यावन्नर्तुमती भवेत;
विवाहोऽष्टमवर्षायाः कन्यायास्तु प्रशस्यते॥
"अष्टवर्षा भवेद् गौरी"ति वचनं यमाङ्गिरसोरपि।

मरीचिः—गौरीं ददन्नाकपृष्ठं वैकुण्ठं रोहिणीं ददत्।
कन्यां ददद् ब्रह्मलोकं रौरवं तु रजस्वलाम्॥
सर्वेषामेव दानानामेकजन्मानुगं फलम्।
हाटकग्रहगौरीणां सप्तजन्मानुगं फलम्॥

यावन्न लज्जयाङ्गानि कन्या पुरुषसंनिधौ।
योन्यादीन्यवगूहेत तावद्भवति नग्निका॥

आचारमाधवीयेऽप्येतत्, किंतु तत्र नग्निकेत्यत्र कन्यकेति पाठः। संग्रहकारोऽपि—

यावच्चेलं न गृह्णाति यावत्क्रीडति पांसुभिः।
यावद्दोषं न जानाति तावद् भवति कन्यका॥

माधवीये स्मृतिः—जन्मतो गर्भाधानाद्वा पञ्चमाब्दात्परं शुभम्। कुमारीवरणं दानं मेखलाबन्धनं तथा॥ ज्योतिर्निबन्धे—षडब्दमध्ये नोद्वाह्या कन्या वर्षद्वयं यतः। सोमो भुङ्क्ते ततस्तद्वद् गन्धर्वश्च तथानलः॥ यतः प्रथमं वर्षद्वयं सोमो द्वितीयं वर्षद्वयं गन्धर्वस्तृतीयं वर्षद्वयं अनलो भुङ्क्ते, अतः षडब्दमध्ये नोद्वाह्येत्यर्थः;

न चैवं सोमादिभोगकालबोधकं रोमदर्शनसंप्राप्ताविस्यादि संवर्तवाक्यं विरुध्यत इति वाच्यम्; द्वयोरप्यर्थवादरूपतया विरोधाभावात्। ज्योतिर्निबन्धे तावत् षडब्दमध्ये नोद्वाह्येत्यस्यार्थवादतया "वर्षद्वयं यतः", इत्येवमादिकमुक्तम्। संवर्तेनापि रोमदर्शनसंप्राप्तौ इत्याद्यर्थवादमभिधाय, तस्माद्विवाहयेत्कन्यां यावन्नर्तुमती भवेदित्युपसंहृतम्।

उभयत्रैव विधेयत्वेनाभिमतोऽर्थस्तदनुगुणार्थवादोपन्यासेन समर्थ्यत इति न किंचिदनुचितम्। गृह्यसंग्रहः—

अप्राप्ता रजसो गौरी प्राप्ते रजसि रोहिणी।
अव्यञ्जिता भवेत्कन्या कुचहीना च नग्निका॥
व्यञ्जनैस्तु समुत्पन्नैः सोमो भुङ्क्ते कन्यकाम्।
पयोधरैस्तु गन्धर्वो रजस्यग्निः प्रकीर्तितः॥
तस्मादव्यञ्जनोपेतामरजामपयोधराम्।
अभुक्तां चैव सोमाद्यैः कन्यकां तु प्रशस्यते॥

रजस इति शैषिके षष्ठी। भुञ्जति भुङ्क्ते। अरजामरजस्कां ईदृशीं कन्यामुभिमेत्य प्रशस्यते, प्रशंसा क्रियते। "नग्निका श्रेष्ठेति सूत्रयता गोभिलेनेति वाक्यशेषः। सकर्मकादपि भावे

लट् । अत्र च विवाहकर्त्रा तावद् गौर्याः प्राप्तौ यतनीयम् ; तत्रैव तस्याभ्युदयविशेषोपदेशात् । रोहिणीकन्ययोस्तु ततोऽपकर्षः । पश्चाद्षडब्दोत्तरकल्पावापद्विषयौ । "सप्तसंवत्सरादूर्ध्वं विवाहः सार्ववर्णिकः । कन्यायाः शस्यते राजन्नन्यथा गर्भगर्हितः ।" इति महाभारतवचनात् । दातुस्तु निर्वसनाया दानं प्रशस्तमित्यूहनीयम् । पैठीनसिः—

यावन्नोद्भिद्येते स्तनौ तावदेव देया, अथर्तुमती भवति, दाता प्रतिगृहीता च नरकमाप्नोति पितृपितामहप्रपितामहाश्च विष्ठायां जायन्ते तस्मान्नग्निका दातव्या । नग्निकाऽनागतार्तवा ।

माधवीये वसिष्ठः—

प्रयच्छेन्नग्निकां कन्यां ऋतुकालभयात्पिता ।
ऋतुमत्यां हि तिष्ठन्त्यां दोषः पितरमृच्छति ॥

अङ्गिराः—

"प्राप्ते तु द्वादशे वर्षे यदा कन्या न दीयते ।
तदा तस्यास्तु कन्यायाः पिता पिबति शोणितम् ॥
यमः—कन्या द्वादशवर्षाणि याऽप्रदत्ता गृहे वसेत् ।
भ्रूणहत्या पितुस्तस्याः सा कन्या वरयेत्स्वयम् । तथा—
प्राप्ते तु द्वादशे वर्षे यः कन्यां न प्रयच्छति ।
मासि मासि रजस्तस्याः पिता पिबति शोणितम् ॥
माता चैव पिता चैव ज्येष्ठो भ्राता तथैव च ।
त्रयस्ते नरकं यान्ति दृष्ट्वा कन्यां रजस्वलाम् ॥
यस्तां विवाहयेत्कन्यां ब्राह्मणो मदमोहितः ।
असंभाष्यो ह्यपाङ्क्तेयः स विप्रो वृषलीपतिः ॥
कन्या तु वृषली ज्ञेया वृषली तु मृतप्रजा ।
शूद्री तु वृषली ज्ञेया कुमारी तु रजस्वला ॥" इति

प्रायेणैतावता कालेनर्तुमती भवतीति द्वादशवर्षोपादानम्, सर्वथा त्वनागतार्तवा दातव्येत्यत्र तात्पर्यम्।

अत एवात्रिकाश्यपौ—

पितुर्गेहे तु या कन्या रजः पश्यत्यसंस्कृता।
भ्रूणहत्या पितुस्तस्याः सा कन्या वृषली स्मृता॥
यस्तु तां वरयेत्कन्यां ब्राह्मणो ज्ञानदुर्बलः।
अश्राद्धेयमपाङ्क्तेयं तं विद्याद् वृषलीपतिम्॥

इति द्वादशवर्षग्रहणं न कुर्वाते। अत एव पूर्वलिखितवचनेष्वपि नग्निकाया दानमुपदिष्टम्। तथा महाभारते—

त्रिंशद्वर्षः षोडशवर्षां भार्यां विन्देत नग्निकाम्।
अतोऽप्रवृत्ते रजसि कन्यां दद्यात्पिता सकृत्॥
महद्धेनः स्पृशेदेनमन्यथैव विधिः समाम्।

अन्यथा=अप्रवृत्ते रजसि।

एतदपि प्राशस्त्यार्थम् । कन्याया यवीयस्त्वमात्रेणैव विवाहे तात्पर्यम् । विवाहतत्त्वार्णव एषैव व्यवस्था । अत एव यवीयसीमित्यवरवयस्कामिति च तत्रोक्तम् । अत एव मनुना त्रिंशद्वर्षस्य द्वादशवर्षाया महाभारतेन च षोडशवर्षाया विवाहोऽभिहित इति ध्येयम् ॥

तत्र चेदमालोचनीयम्—यत् ऊढा ऋतुमत्यपि विधवेव किं परित्याज्या, उत प्रायश्चित्ताचरणपूर्वकं धर्माधिकारमप्यर्हति वा नवेति । तत्र केचिन्मन्यन्ते—यत् ऋतुमत्यूढा न परित्याज्या, किन्तु प्रायश्चित्ताचरणपूर्वकं धर्माधिकारमप्यर्हत्येवेति । अयमाशयः—यथा हि सगोत्राया विधवायाश्च परित्यागो विहितः, न तथा ऊढाया ऋतुमत्याः परित्यागः क्वापि विहितः, प्रत्युत तस्याः स्वीकारार्हतैव प्रायश्चित्तानन्तरं सर्वत्र प्रतिपाद्यते । अयमत्र निष्कर्षः—विधवात्वं हि स्त्रीणां न पातित्यापादकम्, किन्तु सम्यक् परिपालितं श्रेयस एव भवति । नहि क्वापि वैधव्यमपि पातित्यापादकतया विहितमिति तस्मिन् निमित्ते कस्यापि प्रायश्चित्तस्याविधानात्, प्रायश्चित्तशतेनाप्यपरिहरणीयत्वात्, अनन्यपूर्विकात्वांशस्य विवाहाधिकारप्रयोजकस्य संपादनं न संभवति । ऋतुमत्यां रजोदर्शनं हि विवाहानन्तरं न केवलमस्पृश्यत्वादिप्रयोजकम्, न वा विवाहात्पूर्वं तस्या वृषलीत्वस्य तत्पित्रादीनां भ्रूणहत्यादिपापस्य च प्रयोजकम्, किंतु तत्पतेरपि वृषलीपतित्वसंपादकमिति पातित्यप्रयोजकम् । एवं रजोदर्शने निमित्ते प्रायश्चित्तस्य विधानात् शास्त्रप्रामाण्येन तद्दोषनिर्हरणे कृते विवाहाधिकारयोग्यता सिद्ध्यति । तदिदं सिद्धम्—विधवाविवाहो न विधवायाः संस्कारार्थो न वा धर्मप्रजार्थः, ऋतुमतीविवाहस्तु सर्वार्थो भवतीति ।

इयान् विशेषः—विधवाविवाहः शूद्रेषु समाजविशेषमात्रसाधारणः, ऋतुमतीविवाहस्तु ब्राह्मणेतरविषयः । अत एव—

पितृगृहे तु या कन्या रजः पश्यत्यसंस्कृता ।
सा कन्या वृषली ज्ञेया तत्पतिर्वृषलीपतिः ॥
माता चैव पिता चैव ज्येष्ठो भ्राता तथैव च ।
त्रयस्ते नरकं यान्ति दृष्ट्वा कन्यां रजस्वलाम् ॥
उद्वहेद्यस्तु तां कन्यां ब्राह्मणो मदमोहितः ।
असंभाष्यो ह्यपाङ्क्तेयः स विप्रो वृषलीपतिः ॥

इत्यादि लघुशातातपलघ्वाश्वलायनप्राजापत्यादिवचनेषु ब्राह्मणपदप्रयोग उपपद्यते । अयं भावः—विवाहस्त्वष्टवर्षायाः कन्यायाश्च प्रशस्यते—इत्यादिवचनानुसारेणाष्टवर्षायाः कन्याया विवाहे प्रशस्तत्वम् , रजोदर्शनतः पूर्वं नववर्षादेर्गौणत्वम् , रजोदर्शने तु व्याध्यादिप्रयुक्ते आकस्मिके आपत्कल्पनया द्वादशादिवर्षकाया अपि विवाहयोग्यता वर्तते, परन्तु सापि ब्राह्मणेतरविषयैव, न तु सर्वसाधारणी । तथाच रजोदर्शनतः पूर्वमेव ब्राह्मणैः स्त्रीणां विवाहः संपादनीयः, अन्यैस्त्वापत्कल्पनया रजोदर्शनानन्तरमपि विवाहः कर्तुं शक्यते ।

अयं भावः—"स्त्रीणामुपनयस्थाने विवाहं मनुरब्रवीत्" इति वचनेनोपनयनकाल एव विवाहस्य मुख्यः कालः, तत्र 'वाष्टवर्षं ब्राह्मणमुपनयीत'त्यादिना ब्राह्मणानामष्टमवर्ष एव मुख्यकालत्वात् स एव प्रशस्तः । "आषोडशाद् ब्राह्मणस्य सावित्री नातिवर्तते" इति मनुवचनेन षोडशवर्षपर्यन्तं कालोऽभ्यनुज्ञायते ।]

तदुक्तम्—[illegible] यमः—

स्त्रीणामुपनयस्थाने विवाहं मनुरब्रवीत् ।
गर्भाष्टमेऽष्टमे वाब्दे ब्राह्मणस्योपनायनम् ॥
राज्ञामेकादशे सैके विशामेके यथाकुलम् ।

(या० स्मृ० १-१४)

आषोडशाद्द्वाविंशाद्द्वाचतुर्विंशाच्च वत्सरात् ।
ब्रह्मक्षत्रविशां काल औपनायनिकः स्मृतः ॥
अत उर्ध्वं भवन्त्येते सर्वधर्मबहिष्कृताः ।
सावित्रीपतिता व्रात्या व्रात्यस्तोमादृते क्रतोः ॥
( या० स्मृ० १-३-३८ )

अत ऊर्ध्वं भवन्त्येते यथाकालमसंस्कृताः ।
सावित्रीपतिता व्रात्या भवन्त्यार्यविगर्हिताः ॥
नैतैरपूतैर्विधिवदापद्यपि हि कर्हिचित् ॥
ब्राह्मान् योनांश्च सम्बन्धानाचरेत् ब्राह्मणः सह ॥ इति
( मनु० २-४० )

नहि वयं षोडशे वयस्येव विवाहो योग्य इति वदामः, किन्तु तस्मिन्नपीति । ततश्चाष्टमादिवयस्काया इवाषोडशवर्षाया एव ब्राह्मणकन्यायाः, एवमाद्वाविंशादिवयस्कायाः क्षत्रियादिकन्यायाश्च विवाहो योग्य एव । अत एव—

विवाहे वितते यज्ञे होमकाल उपस्थिते ।
कन्यामृतुमतीं दृष्ट्वा कथं कुर्वन्ति याज्ञिकाः ॥

इत्याश्वलायनवचनमुपपन्नं भवति । अन्यथा—

अष्टवर्षा भवेद् गौरी नववर्षा तु रोहिणी ।
दशवर्षा भवेत्कन्या अत ऊर्ध्वं रजस्वला ॥

इति वचनानुसारेणैकादशवयसः पूर्वमेव विवाहयोग्यत्वेऽप्रसक्तविचारापत्तिरत्र स्यात् । नहि वातप्रकृतिकाः पित्तप्रकृतिका दारुणप्रकृतिकाः याः का अपि एकादश वयसि दृष्टरजस्का भवन्ति। तदुक्तम्—

वातजा पित्तजा चेति दारुणा त्रिविधा स्मृता ।
वातजा द्वादशे वर्षे पित्तजा च चतुर्दशे ॥
दारुणा षोडशे वर्षे शोणितं वमति ध्रुवम् ।
( इति कालनिर्णयदीपिका )

दशवर्षा भवेत्कन्या अत ऊर्ध्वं रजस्वला।
प्राप्ते तु द्वादशे वर्षे रजः स्त्रीणां प्रवर्तते॥

( आपस्तम्बः ) इति। एतेन—

गौरीं ददत् नाकपृष्ठं वैकुण्ठं रोहिणीं ददत्।
कन्यां ददत् ब्रह्मलोकं रौरवं तु रजस्वलाम्॥

इत्यादिवचनान्यपि व्याख्यातानि; एतेषां वचनानां द्वादशाद्यधिकवयस्काभिप्रायत्वात्। अयमाशयः—ऋतुकालोपक्रमो हि कासाञ्चन द्वादशे वयसि, कासाञ्चन चतुर्दशे वयसि, कासाञ्चन षोडशे वयसि। तत्र यदि वातप्रकृतिकत्वादिनिर्णयः, तर्हि कासाञ्चन षोडशवयःपर्यन्तमपि दारुणानां विवाहं विनाऽवस्थापनं योग्यमेव तत्पश्चात्तरं विवाहायोग्यतापक्षेऽपि। तत्र मुख्यः कालः अष्टमं वयः, द्वादशवर्षपर्यन्तं गौणः कालः, ततः षोडशवर्षपर्यन्तं आपत्कल्प इति विवेकः। षोडशवयसोऽनन्तरं तु व्रात्यसंस्कारेणैव विवाहयोग्यता। सर्वथा तु द्वादशवर्षमारभ्यैव विवाहकालव्यवस्थापनेन यदि परिस्थितेरस्या आनुकूल्यं भवति, तर्हि तद्व्यवस्थापनमिदं योग्यमेव प्रतीयते। तदिदं सिद्धम्—न "अत ऊर्ध्वं रजस्वला" इतिवाक्यानुसारेण दशमवयसः पूर्वमेव विवाहो योग्य केचित् मन्यन्ते।

अन्ये तु—

*ऋतुकाल इति प्रोक्तं गार्ग्यादिमुनिसत्तमैः।*
स्त्रीचिन्हं यौवनं प्राप्य षोडशे वत्सरे सदा॥
कृत्रिमाद् दशमादूर्ध्वं औषधस्य च सेवनात्।
एकादशे द्वादशे वा ऋतुकालं वदन्ति हि॥
अनुरागाद् द्वादशाब्दे त्रयोदश्यां तु केचन।
चतुर्दशे पञ्चदशे स्त्रीचिन्हं तु भविष्यति॥

इतिवचनानुसारेण दशमवय आरभ्यापि ऋतुकालस्य संभवात् "दशवर्षा भवेत्कन्या अत ऊर्ध्वं रजस्वला" इति स्मृतिवचनं न कथमपि विरुद्धम्। तत्र च का वा किम्प्रकृतिरिति निर्णयादिकं मतिक्लेशसाध्यमिति एकादश आरभ्यैव रौरवप्राप्तेः फलस्य वर्णनात् अनिष्टफलत्वेन निन्दनाच्च ततः पूर्वमेव विवाहो योग्यः। यत्तु—

ऊनषोडश (द्वादश) वर्षायामप्राप्तः पञ्चविंशतिम्।
यद्याधत्ते पुमान् गर्भं गर्भस्थः स विपद्यते ॥
जातो वा न चिरं जीवेत् जीवेद्वा दुर्बलेन्द्रियः।
तस्मादत्यन्तबालायां गर्भाधानं न कारयेत् ॥

इति (सुश्रुते १०)

पूर्णषोडश (द्वादश) वर्षा स्त्री पूर्णविंशेन संगता।
शुद्धे गर्भाशये मार्गे रक्ते शुद्धेऽनिले हृदि ॥
वीर्यवन्तं सुतं सूते ततो न्यूनाब्दयोः पुनः।
रोग्यल्पायुरधन्यो वा गर्भो भवति नैव वा ॥

इति (अष्टाङ्गशारी० १०८-९) सुश्रुतादिवचनजातम्, तदिदमपि दारुणप्रकृतिस्त्रीविषयमेव, न वातादिप्रकृतिस्त्रीविषयम्। अत एव—"प्रायिकं चैतत्, अर्वागपि साधुगर्भदर्शनात्" इति अष्टाङ्गहृदयव्याख्यायामरुणदत्तकृतायामुक्तश्लोकगतं विवरणमुपपद्यते। तथाच दशमवयसः पूर्वमेव विवाहो योग्यः, न तु द्वादशादिवयसि। एतदेवाभिप्रेत्योक्तम्—

कन्या द्वादशमे वर्षे प्रदातुर्न गृहे वसेत्।
भ्रूणहत्या पितुस्तस्याः सा कन्या वरयेत्स्वयम्। (यमः)
कन्या द्वादशवर्षाणि याऽप्रदत्ता गृहे वसेत्।
ब्रह्महत्या पितुस्तस्याः······(निर्णय० यमः)
प्राप्ते तु द्वादशे वर्षे यः कन्यां न प्रयच्छति।

मासि मासि रजस्तस्याः पिबन्ति पितरोऽनिशम् ।
( पराशरः )
अष्टमे तु भवेद्गौरी नवमे नग्निका भवेत् ।
दशमे कन्यका प्रोक्ता द्वादशे वृषली स्मृता ॥
गौरीं ददत् नाकलोकं वैकुण्ठं रोहिणीं ददत् ।
कन्यां ददत् ब्रह्मलोकं रौरवं तु रजस्वलाम् ॥
( मरीचिः )

एवं वर्णयतामस्माकं न द्वादशवयसि रजोदर्शने कन्याया विवाहायोग्यतेत्याशयः, किन्तु तया सार्कं पित्रादीनां संबन्धविच्छित्तियोधन एव । अत एव पूर्वोदाहृते "कन्या द्वादशमे वर्षे" इति वचने "सा कन्या वरयेत्स्वयम्" इति स्वयंवरणाधिकारः प्रतिपादित उपपद्यते । अयं भावः—ब्राह्मविवाहादिषु हि—

आच्छाद्यार्चयित्वा च श्रुतिशीलवते स्वयम् ।
आहूय दानं कन्याया ब्राह्मो धर्मः प्रकीर्तितः ॥
यज्ञे तु वितते सम्यगृत्विजे कर्म कुर्वते ।
अलङ्कृत्य सुतादानं दैवं धर्मं प्रचक्षते ॥२८॥
एकं गोमिथुनं द्वे वा वरादादाय धर्मतः ।
कन्याप्रदानं विधिवदार्षो धर्मः स उच्यते ॥
सहोभौ चरतां धर्ममिति वाचाऽनुभाष्य च ।
कन्याप्रदानमभ्यर्च्य प्राजापत्यो विधिः स्मृतः ॥
ज्ञातिभ्यो द्रविणं दत्त्वा कन्यायै चैव शक्तितः ।
कन्याप्रदानं स्वाच्छन्द्यादासुरो धर्म उच्यते ॥

इत्यादिवचनविहितेषु दानपूर्वकत्वं यदपेक्षितम्, तदिदमृतुमत्याः स्वयंवरणार्थं प्रवृत्तया अन्यकर्तृकदानाभावेऽपि स्वकर्तृकदानेनैव संपादनीयम्, न तु तस्या दाने ऋत्वनन्तरं पित्रादीनामप्यधिकारोऽस्तीति स्वयंवरविधिनाऽवगम्यते । तदिदं च मनु-

मत्याः कन्यायाः पित्रादिस्वत्वनिषेधतात्पर्यकमित्येव गमयतीति पित्रादिसम्बन्धविच्छित्तिः स्पष्टमवगम्यते। यत्तु—

इच्छयाऽन्योन्यसंयोगः कन्यायाश्च वरस्य च
गान्धर्वः स [illegible] विज्ञेयो मैथुन्यः कामसंभवः।

इति विहितो गान्धर्वविवाहः स्वयंवरणपूर्वकश्चेत् ऋतुमत्या अपि पूर्वोक्तरीत्या न दोषाय। परंतु नात्र पित्रादिसम्बन्धरक्षणसम्भवः। यस्तुतस्तु रजोदर्शनतः पूर्वमपि अनुरागो द्वादशे वयसि चतुर्दशे वा यस्याः कस्याश्चन दारुणप्रकृत्याः संभवतीति, नायं विवाहो रजोदर्शनानन्तरमेव भवतीति गान्धर्वविवाहविधिर्न रजोदर्शनानन्तरमेव विवाहसाधको भवितुमर्हति। तथाच यदि पित्रादिदत्तां पितृस्वत्वमात्मनोऽभिमन्यमानां च दृष्टरजस्कां कन्यामुद्वहेत्, स सर्वात्मनाऽपाङ्क्तेयो वृषलतुल्यत्वादिति सिद्धम्। एतदेवाभिप्रेत्योक्तम्—

पितुर्गेहे तु या कन्या रजः पश्यत्यसंस्कृता।
सा कन्या वृषली ज्ञेया तत्पतिर्वृषलीपतिः॥
यस्तां समुद्वहेत् कन्यां ब्राह्मणो मदमोहितः।
अश्राद्धेयमपाङ्क्तेयं तं विद्याद्वृषलीपतिम्॥
या कन्या पितृवेश्मस्था यदि पुष्पवती भवेत्।
असंस्कृता परित्याज्या न पश्येत्तां कदाचन॥
विवाहे च न योग्या स्यात् लोकद्वयविगर्हिता।
पितृवेश्मनि या कन्या रजः पश्यत्यसंस्कृता॥
तस्यां मृतायां नाशौचं कदाचिदपि शाम्यति।

यत्तु पुनः—

"काममामरणात्तिष्ठेत् गृहे कन्यर्तुमत्यपि।
न चैवैनां प्रयच्छेत्तु गुणहीनाय कर्हिचित्॥

इति मनुवचनम्, तदिदं ऋतुमत्यपीत्यपिशब्दयोगाद् गुणवद्वरस्तुत्यर्थमित्येवावगन्तव्यम्। तथा च गुणवद्वरालाभेऽपि कन्यायाः प्रागेव कन्यादानं योग्यम्, न तु ततः परम्। "त्रीणि वर्षाण्यृतुमती काङ्क्षेत पितृशासनम्" इति वाक्यं तु, वयं मन्यामहे, वाग्दत्तस्य गुणवतो वरस्य देशान्तरगमने पुनरागमनसंभावनायां वर्षत्रयप्रतीक्षणपरमिति। अत एव—

प्रतिगृह्य तु यः कन्यां वरो देशान्तरं व्रजेत्।
त्रीनृतून् समतिक्रम्य कन्याऽन्यं वरयेद्वरम्॥

इति वचनमुपपद्यते। अन्यस्मा अदाने ऋतुमत्याः स्वयं वरणे एवाधिकारः, न तस्या दाने पित्रादीनामधिकार इति सिद्धम्। एतेन—

वरयित्वा तु यः कश्चित् प्रणश्येत्पुरुषो यदा ।
ऋत्वागमांस्त्रीनतीत्य कन्याऽन्यं वरयेत्पतिम् ॥
( निर्ण० सि० ३ प० वि० ८४० पृ० वैद्य० आ-
चा० कात्या० १३४ पृ० )
त्रीनृतूनतीत्य स्वयं युज्येत ( गौतमः )
कुमारी ऋतुमती त्रीणि वर्षाण्युपासीत, ऊर्ध्वं
त्रिवर्षेभ्यः पतिं विन्देत तुल्यम् । वसि० ७ अ०
पिता दद्यात्स्वयं कन्यां भ्राता वानुमते पितुः ।

अत्र सवर्णप्रयोगादसवर्णाविवाहोऽपि योग्यो वा नवेति विचारे तु—याज्ञवल्क्यो मन्यते—"यदुच्यते द्विजातीनां शूद्राद् दारोपसंग्रहः । नैतन्मम मतं यस्माद् जायतेऽस्याम्" इति त्रैवर्णिकानां शूद्रापरिग्रहो न योग्यः, इति ततश्च त्रैवर्णिकानां मध्येऽसवर्णाविवाहः, शूद्रैस्तु तं निषेधति, न केवलं निषेधति, किन्तु—

तिस्रो वर्णानुपूर्व्येण द्वे तथैका यथाक्रमम् ।
ब्राह्मणक्षत्रियविशां भार्या स्वा शूद्रजन्मनाम् ॥

इति विशदं तेषु परस्परविवाहमनुमन्यतेऽपि । इयमत्र मिताक्षरा—सवर्णा पुनः सर्वेषां मुख्यैव स्थिता। पूर्वस्याः पूर्वस्या अभाव उत्तरोत्तरा भवति । मनुस्तु ब्राह्मणानां चतुर्ष्वपि विवाहमनुमन्यते, परंतु कलिवर्ज्यप्रकरणे—

"कन्यानामसवर्णानां विवाहश्च द्विजातिभिः ।"

इति विशदमसवर्णाविवाहो निवर्त्यते । निवर्तितस्यास्य प्रवर्तनेऽपि कियान् धर्मज्ञानामधिकार इति त एव नाम विचारयन्तु । यथाच कलिवर्ज्यप्रकरणं सर्वं प्रसज्यप्रतिषेध एव, न तु पर्युदासः, कारकविषयत्वे निषेधस्य "न रात्रौ श्राद्धं कुर्यात्" "न प्रथमयज्ञे प्रवृञ्ज्यात्" इत्यादाविव विकल्पापसक्तेः, तथा पूर्वमेव निरूपितम्, इति न तस्याभ्यनुज्ञानसंभवः ।

अत्रेदमवसरप्राप्तम्—यत्सवर्णेष्वेवावान्तरविभागा ये किलोपलभ्यन्ते, विवाहे च ये नियमेन परिपाल्यन्ते, अन्यथा च दोषो मन्यते, किमिदं समूलम्, उत निर्मूलम्, का वाऽत्र व्यवस्था समादरणीयेति।

अत्र काशीहिन्दुविश्वविद्यालयाध्यापकैश्चिरेणैकं व्यवस्थापत्रं यत् संपादितम्, तत् प्रथमत उपक्षिपामः।

ब्राह्मणानां श्रेण्यन्तरगतैर्ब्राह्मणैः सह परस्परं विवाहसम्बन्धः शास्त्रसम्मतो नवेति प्रश्ने विषयमिमं निर्धारयितुं बह्वीषु मनु-याज्ञवल्क्य-गौतम-वशिष्ठापस्तम्ब-बोधायन-पराशर-बादरायणप्रभृतिमहर्षिप्रणीतासु स्मृतिषु, लक्ष्मीधर-हेमाद्रि-माधव-मित्रमिश्र-कमलाकर-प्रमुखैर्निबद्धेषु कृत्यकल्पतरु-चतुर्वर्गचिन्तामणि-माधवीय-वीरमित्रोदय-निर्णयसिन्धुप्रभृतिषु सर्वधार्मिकजनसमादृतेषु ग्रन्थेषु श्रुति-स्मृत्याचाराणां प्रमाण निर्णायकपरमर्षिजैमिनि-शबर-कुमारिल-प्रभाकरादिवाङ्मयेषु च सम्यगालोडितेषु निष्कर्षोऽयं प्रकटीभवति—"गुरुणाऽनुमतः स्नात्वा समावृत्तो यथाविधि। उद्वहेत द्विजो भार्यां सवर्णां लक्षणान्विताम्" ( इति मनुः ) "अरोगिणीं भ्रातृमतीमसमानार्षगोत्रजाम्" "एतैरेव गुणैर्युक्तः सवर्णः श्रोत्रियो वरः" ( इति याज्ञवल्क्यः ) "स्नात्वा समुद्वहेत् कन्यां सवर्णां लक्षणान्विताम्" (इति व्यासः) "भार्याः सजात्याः सर्वेषां धर्मः प्राथमकल्पिकः" (इति यमः) "अयमर्थः—समावृत्तस्य त्रैवर्णिकस्य प्रथम-विवाहे सवर्णैव मुख्या, क्षत्रियादिषु प्रायश्चित्तस्मरणात्" ( इति वीरमित्रोदयकारः ) "पाणिग्रहण-संस्कारः सवर्णासूपदिश्यते" ( इति विष्णुः ) "अनेन विधिना सम्यक् कृत्वा वेदमधीत्य च। गृहस्थधर्ममाकाङ्क्षन् गुरुगेहादुपागतः। अनेनैव विधानेन कुर्याद् दारपरिग्रहम्। कुले महति सम्भूतां सवर्णां लक्षणान्विताम्" (इति लघुविष्णुः) "गृहस्थः

सदृशीं भार्यां विन्देत अनन्यपूर्वां यवीयसीम्" असमान-प्रवरयोर्विवाहः" (इति गौतमः) "सदृशीं जात्या कुलेन च" (इति तद्व्याख्यायां हरदत्तः) "ब्राह्मे विवाहे बन्धु-शील-लक्षण-सम्पन्नः श्रुतायुरारोग्याणि बुध्वा प्रजासहत्वकर्मभ्यः प्रतिपादयेत्" (इत्यापस्तम्बः) इत्येवमादिभिर्वचनैः प्रमाणैः सवर्णा सापिण्ड्य-समान गोत्र-प्रवरादि-दोष-विनिर्मुक्ता रोगरहिता च कन्या विवाह्या इत्येव प्रतीयते। अत एव "उदगयन आपूर्यमाणपक्षे पुण्याहे कुमार्याः पाणिं गृह्णीयात्" इति शाङ्खायन गृह्यसूत्रीयम् "अनेन सवर्णायाः पाणिग्रहणं विधेयम्, नत्वन्यवर्णायाः" इति नारायणभाष्यं समुपपद्यते।

अत्र पर्युदसनीयगणनासु न कुत्रापि सवर्णानामवान्तरश्रेणी-विवाहः पर्युदस्यते, प्रतिषिध्यते वा।

यच्च—देश-कुलाचाराणां प्रामाण्यमुक्तम्—"एतेन देशकुल-धर्मा व्याख्याताः" (इत्यापस्तम्बधर्मसूत्रम्) देश जाति-कुलधर्माश्चा-म्नायैरविरुद्धाः प्रमाणम्" (इति गौतमधर्मसूत्रम्) "यश्च देशानु-रूपेण कुलमार्गेण चोद्वहेत्। नित्यं स कुलधर्मस्स्याद् वेदाच्चैतत् प्रदृश्यते" (इति निर्णयसिन्धौ चतुर्विंशतिमतम्) इति, तदपि तत्तज्जा-ति-कुलेषु व्यवहारतः प्रचलतां स्मृतिष्वनिबद्धानां येषाञ्चन धर्माणां संग्रहार्थम्। अत एव 'देश-जाती'ति गौतमधर्मसूत्रे हरदत्तो व्या-चख्यौ—"देशधर्माः मेषस्थे सवितरि चोलेषु कुमार्यो नानावर्णैं रजोभिर्भूमावादित्यं सपरिवारमालिख्य सायं प्रातः पूजयन्ती-त्यादयः। जातिधर्माः—शूद्राविवाहे मध्येस्थूणं निधाय नाना वर्तीरिकस्यां स्थाल्यां निधाय प्रतिवर्तिं दीपानारोप्य घटं हस्ते गृहीत्वा प्रदक्षिणं नयन्ति, अन्यदप्येवंजातीयकं द्रष्टव्यम्। कुल धर्माः—केचिन्मुखेशिखाः केचित् पृष्ठेशिखा इत्यादयः। ये त्वा-

ऽऽम्नायविरुद्धाः मातुल-सुतापरिणयनम्, अनधीत्य वेदानन्यत्र श्रमः, इत्यादयो देशधर्मास्ते न प्रमाणम्—" इति।

एवं देशजातिकुलधर्मान् प्रमाणन्त्यः सर्वा अपि स्मृतयो हरदत्तोक्ततात्पर्ये एव पर्यवस्यन्ति।

एवञ्चाचारपरिगृहीतत्वादेवावान्तरश्रेणीष्वेव विवाह इति नियमो न सिध्यति, तस्य देश-जाति-कुलधर्माचारत्वेन तैरपरिगणनात्।

किञ्च एतस्य अवान्तरश्रेणीविवाहनियमस्य अभिमानमूलकत्वं सम्भाव्यते। सम्भाविताऽसन्मूलकानां स्मृतीनामाचाराणां वा हेतुदर्शनाधिकरणन्यायेन स्वरूपतोऽप्रामाण्यमननुष्ठानलक्षणं वा प्रामाण्यं केन वार्येत? अपिच "सारस्वताः कान्यकुब्जा गौड-मैथिलकोत्कलाः। पञ्च गौडा इति ख्याता विन्ध्यस्योत्तरवासिनः। कार्णाटाश्चैव तैलङ्गा गुर्जरा राष्ट्रवासिनः। आन्ध्राश्च द्राविडाः पञ्च विन्ध्य-दक्षिण वासिनः" इति स्कन्दपुराणे, योऽयमवान्तर-श्रेणीविभागो ब्राह्मणजातौ स्मर्यते, स सर्वोऽपि तत्तद्देशवासनिबन्धनो न पृथग्जातिनिबन्धनः, इति तत् इति तच्छब्दात् स्पष्टमेव प्रतीयते, प्राच्योदीच्य-दाक्षिणात्यत्वादिवत्।

प्राच्यत्वादीनां जातित्वाभावं व्यवस्थापयामासुर्होलाकाधिकरणे मीमांसकमूर्धन्या महर्षि-जैमिनिप्रभृतयः "आख्या हि देशसामान्यात्", (१। ३। १४), देशसंयोगादाख्या भवतीति भगवान् शबरस्वामी। समाख्यायास्तावन्न देशादन्यद् निमित्तमस्तीति कुमारिलः। प्राच्योदीच्यदाक्षिणात्याभिमानिनः कुर्वते होलाकादीनामेवं व्यवस्थाम्। नचाभिमानस्य किञ्चिद् नियामकमस्तीत्यव्यवस्था। नास्ति विधिस्तावन्नियामकः, नियोगमात्रपर्यवसायी हि सः, नाभिमानप्रभवं वचनमिति मिश्रप्रभाकरादय।

एतावता प्रमाणजातेन ब्राह्मणत्वं जातिः, नतु तद्व्याप्यं कान्यकुब्जत्वादिकमिति सिध्यति। अत एव सर्वदेशीयानां ब्राह्मणानां वात्स-गौतम-वसिष्ठ-भरद्वाजप्रभृतयो वंशप्रवर्तका ऋषयस्समाना एव श्रूयन्ते, तेषां संस्काराश्च समानाः, कर्माण्यपि च, यजनयाजनादीनि च तुल्यान्येव शास्त्रविहितानि। एतेन ये कान्यकुब्जत्व-सारस्वतत्व-गौड-त्व-महाराष्ट्रत्वादिजातीरङ्गीकृत्यावान्तरश्रेणीविवाहनिषेधं समर्थयन्ते, तेऽपि समाहिताः।

एवञ्च सर्वेषु स्मृतितन्निबन्धरूपेषु धर्मशास्त्रग्रन्थेषु सवर्णानां परस्परविवाहस्यैव सापण्ड्य-सगोत्रत्वादि-दोषासंस्पृष्टस्य विधानात्, अवान्तरविभागविवाहनिषेधस्य स्मृतिषु क्वचिदप्यनुपलम्भात्, शिष्टैः श्रेण्यन्तरविवाहस्य क्वचिदाचरणाच्च, तुल्यशीलाचारवतां परीक्षितविशुद्धकुलपरम्पराणां ब्राह्मणानां तादृशैरेव श्रेण्यन्तरब्राह्मणैः सह क्रियमाणो विवाहसम्बन्धः सर्वथा शास्त्रसम्मत एवेति।

तत्र प्रथमं कुत्रापि मनु-याज्ञवल्क्यादिप्रणीतस्मृतिषु नास्यावान्तरविभागपरिपालनस्य न मूलमुपलभ्यत इति यद्वर्ण्यते, तत्र सर्वासु स्मृतिषु कुलपरीक्षाया अत्यावश्यकत्वस्य वर्णनात् विशिष्य च याज्ञवल्क्यस्मृतौ—

"दशपुरुषविख्यातात् श्रोत्रियाणां कुलोत्तमात्"

इति दशपुरुषपर्यन्तप्रसिद्धेरावश्यकतायाः प्रतिपादनात् दशपुरुषपर्यन्तकुलपरीक्षणाशक्तयैवावान्तरविभागस्य परिपालनाच्च नेदं विवाहेऽवान्तरविभागपरिपालनं सर्वथा निर्मूलम्।

कुमारिलपादा अपि हि—न च स्त्रीणां कचिद् व्यभिचारदर्शनात्सर्वत्रैव कल्पना युक्ता; लोकविरुद्धानुमानासम्भवात्। विशिष्टेन हि प्रयत्नेन महाकुलीनाः परिरक्षन्त्यात्मानम्। अनेनैव हेतुना राजभिर्ब्राह्मणैश्च स्वपितृपितामहादिपरम्परास्मरणार्थं

समूहलेख्यानि प्रवर्तितानि । तथाच प्रतिकूलं गुणदोषस्मरणात्तदनुकूलासु स्वपितृ-पितामहादिपरम्परासु यत्र विवाहसम्बन्धो वर्तते, तत्रैव विवाहसम्बन्धकरणं योग्यमिति सूचयन्ति ।

एतेन—निबन्धग्रन्था अपि—व्याख्याताः । नहि सर्वेऽपि निबन्धग्रन्था अवान्तरविभागमिदमाशास्त्रीयं मन्यन्त इति संभवति । यद्यप्यत्र बहवो निबन्धकाराः उदासीना एव दृश्यन्ते विशिष्याविचारात्, बालम्भट्टी तु न तथोदासीना ।

तद्यथा "किञ्च चरणव्यूहाख्यपरिशिष्टभाष्ये स्पष्टं वेदशाखयोर्विभाग उक्तः । तथाहि—इतरदेशेषु वेदशाखयोर्विभाग उच्यते । तथाच महार्णवे—

"पृथिव्या मध्यरेखा या नर्मदा परिकीर्तिता ।
दक्षिणोत्तरयोर्भागे शाखा वेदश्च उच्यते ॥
नर्मदादक्षिणे भागे आपस्तम्ब्याश्वलायनी ।
राणायनी पिप्पलादी यज्ञकन्याविभागिनः ॥
माध्यन्दिनी शाङ्ख्यायनी कौथुमी शौनकी तथा ।
नर्मदोत्तरभागे च यज्ञकन्याविभागिनः ॥
तुङ्गा कृष्णा तथा गोदा सह्याद्रिशिखरावधि ।
आन्ध्रदेशपर्यन्तं बह्वृचस्याश्वलायनी ॥
उत्तरे गुर्जरे देशे वेदो बह्वृक् प्रकीर्तितः ।
कौशीतकीब्राह्मणञ्च शाखा शाङ्खायनी स्थिता ॥
आन्ध्रादिदक्षिणाग्नेयी गोदासागर आवधि ।
यजुर्वेदस्तैत्तिरीया आपस्तम्बी प्रकीर्तिता ॥
सह्याद्रिपर्वतारम्भा दिशा नैर्ऋत्यसागरात् ।
हिरण्यकेशीशाखा च पर्शुरामस्य सन्निधौ ॥
मयूरपर्वताच्चैव यावद् गुर्जरदेशतः ।
व्याप्ता वायव्यदेशात्तु मैत्रायणी प्रतिष्ठिता ॥

अङ्गवङ्गकलिङ्गाश्च कानीनो गुर्जरस्तथा ।
वाजसनेयीशाखा च माध्यन्दिनी प्रतिष्ठिता ॥
ऋषिणा याज्ञवल्क्येन सर्वदेशेषु विस्तृता ।
वाजसनेयी वेदस्य प्रथमा कण्वसंज्ञिका ॥ इति ॥

तथाच यद्देशवासित्वेन येषां यथाऽनुष्ठानमुक्तम्, तेषां देशान्तरगमनेऽपि तथैवानुष्ठानम्; अन्यथा रण्डत्वप्रयुक्तप्रायश्चित्तापत्तिः। न चैषां निर्मूलत्वमिति वाच्यम्; महार्णवस्योपलभ्यमानत्वात्। संवाद्याचारस्य तथैवोपलभ्यमानत्वाच्चेति दिक्—इति ॥

अत्र हि नर्मदोत्तरभागे ये वर्तन्ते, ये च नर्मदादक्षिणभागे वर्तन्ते, तेषां विवाहादिसम्बन्धो न युक्त इति स्पष्टं विवेचयित्वा नर्मदादक्षिणभागेऽपि तैत्तिरीयशाखावलम्बिनामाश्वलायनशाखावलम्बिनाञ्च पृथक्करणेन तेषामपि विवाहादिसम्बन्धयोगः प्रतिपाद्यमानो विरुद्धतत्तच्छाखावलम्बिनां परस्परं विवाहायोगं गमयति। अत्र चापस्तम्बशाखीयानामाश्वालायनशाखीयैर्न विरोधः; उभयोरपि भिन्नवेदस्थत्वात्। एतेन—सामगा अपि—व्याख्याताः। प्रतिवेदं हि बह्वीनां शाखानामवस्थानाद् येषां यच्छाखीयत्वं परम्परावगतम्, सा शाखा यत्र वेदे वर्तते, तत्रैव भवति, तर्हि तेषां परस्परविवाहायोगोऽविवादसिद्ध एव। एवञ्च दाक्षिणात्येष्वान्ध्राणां केषाञ्चन वाजसनेयिनां द्राविडैरापस्तम्बशाखीयैर्विवाहो न योग्य इति सिद्धम्। उत्तरदेशीयानां बह्वृचानां दक्षिणदेशीयानां बह्वृचानां च परस्परविवाहस्तु स्पष्टमेव वचनेनैव निषिद्धः। आपस्तम्बीयानामेवान्ध्राणां द्राविडानां महाराष्ट्रीयाणाञ्च परस्परविवाहस्तु नायोग्यः, यतः स सम्प्रदायो बहोः कालादारभ्य प्रचलति। ये पुनः द्राविडेष्वान्ध्रेषु गुर्जरेषु वङ्गीयेषु कानीनेष्वन्येषु च बहवो विभागाः, यत्र परस्परं विवाहसम्बन्ध इदानीमपि नास्ति, न योग्य इति च बहूनां वाद इदानीं वर्तते; ते तु विवाहाङ्गतया

कुलपरीक्षा या कर्त्तव्या वर्तते, तदर्थं कल्पिताः पूर्वतनैरिति पश्यामः। न ह्यादित आरभ्य कुलपरीक्षा सर्वैरपि कर्तुं शक्यत इति यत्र परस्परं विवाहो यह्वोः कालादारभ्य प्रवृत्त आसीत्, तेषां नामविशेषादिना व्यवस्था कृतेति मन्तव्यम्। कुमारिलपादा हि स्त्रीणां व्यभिचारशङ्का मा भूदिति समूहलेख्यं प्रवर्तितमिति तन्त्रवार्तिके वदन्ति। स्त्रीणां हि व्यभिचारबुद्धौ स्वपतेर्विवाहायोग्यकुलीनत्वमप्येकं निमित्तम्। अतः समुचितं यत्र स्वपितृमातृवंशयोरन्यतरस्य सम्बन्धोऽनादिकालमारभ्य प्रचलितः, तत्कुलमेव विवाहार्थं ग्रहणीयमिति। ग्रामादिभेदेन द्राविडादीनां विभागोऽपि ( वडम, बृहच्चरण, अष्टसहस्रम् ) इत्यादिर्योग्य एव। अतो यावच्छक्ति यत्र पूर्वतनानां सम्बन्धः कथञ्चन परम्परया यह्वोः कालादारभ्य प्रचलति, तत्कुलमेव विवाहार्थं स्वीकर्तव्यमिति-विभागान्तरीयाणां स्वीये विभागे कन्याया वरस्य वा लाभेऽपि विभागान्तरीयकन्यादिस्वीकारार्थं प्रवृत्तिरनुचितैवेति सिद्धम्। अतिप्रयत्नेनापि स्वीये विभागे वरालाभयादास्तु साहसमात्रनिबन्धना वैतण्डिकाद्येवेति वयं सुधीरं वदामः।

अत्र केचिन्मन्यन्ते—यद् ब्राह्मणादीनामवान्तरविभागेषु मिथो यौनसम्बन्धो न शास्त्रविरुद्धः। यतः सर्वेऽपि ब्राह्मणादय एकस्य कश्यपस्यैव चन्द्रादेर्वा वंशजाताः, महर्षिषु च सर्वेषु न कश्चिद्धुषणीयभावः—इति। तत् येष्ववान्तरविभागेषु जलपानौदनभोजनादिविभागः प्रचलति, तेषु यौनः सम्बन्धो योग्यः शास्त्राविरुद्धश्च। अयं भावः—"पङ्क्त्याविभागिनः" इति वचनानुसारेण यज्ञादौ येषां सहसम्बन्धो योग्यस्तेषां यौनसम्बन्धेऽपि सहयोगो योग्य इत्यङ्गीकर्तव्यम्—इति वचनादवगम्यते।

तत्र केषाञ्चन यज्ञसम्बन्धमात्रम्; केषाञ्चन यज्ञयौनोभयसम्बन्ध इति कल्पने वैरूप्यकल्पनापेक्षया हि सर्वेषां सर्वसम्बन्ध-

करणं योग्यमिति यद्येषामाशयः,तर्हीदं विचारणीयम्—कथंक्षत्रियाणामपि ब्राह्मणैर्यौनसम्बन्धो न भवतीति। अतोऽवश्यमिदमूरीकर्तव्यम्—यत् कन्यासम्बन्धो यज्ञसम्बन्धश्च साधारणतया न कल्पयितुं युज्यते, किन्तु अवान्तरविभागमादायैव। तथा च यथा श्राद्धादौ अवरणीयानां न यौनसम्बन्धयोग्यता, एवमवान्तरविभागेष्वपि न सर्वथा तद्योग्यता। अत एव विवाहाङ्गं कुलपरीक्षणमुपपद्यते। नहि ब्राह्मण्यादिपरीक्षणं कुलपरीक्षणं नाम। अवान्तरविभागो ह्ययं विवाह एव सर्वत्र परिपाल्यते, नान्यत्र। तत्र सगोत्रायाः सपिण्डाया दोषान्तरदूषितायाश्च यथा ब्राह्मणत्वादिसाम्येऽपि न विवाहयोग्यता, एवमवान्तरविभागविशेषबहिर्भूताया अपि न तद्योग्यता। अस्य चावान्तरविभागपरिपालनस्य कुलपरीक्षायां विशेषत उपयोगः। इममुपयोगमभिप्रेत्यैव कुमारिलपादा अपि स्त्रीरक्षणार्थं समूहलेख्यं प्रवर्तितमिति विवेचयन्ति।

विवाहेऽवान्तरविभागपरिपालनस्यादृष्टं फलं भवतु वा,मा वा। दृष्टं तु फलं समाजसंघटनं वर्तत एव। समाजसंघटनं हि समाजावयवानां नियन्त्रणं विना न संभवति। तच्च बहूनामवान्तरविभागानां प्रतिसमाजं कल्पनेन तत्र समाजान्तरीयैः साकं विवाहभोजनादिसम्बन्धायोग्यताव्यवस्थापनेन चैव भवति, नान्यथा। इदानीं हि बहवः समाजान्तरेणापि यौनसम्बन्धादिकरणेन न केवलं स्वीयसमाजोल्लंङ्घनेन स्वीयं समाजमेव विघटयन्ति, किन्तु समाजान्तरमपि, इत्यवान्तरविभागपरिपालनं हि नितरामेव योग्यम्। वानरा अपि हि ग्रामान्तरीयवानरैः साकं न यौनसम्बन्धं कुर्वन्ति। प्रत्यक्षमिदं तिरुपतिप्रभृतिषु देशेषु। तत्र गोपुरान्तरवर्तिभिर्वानरैर्गोपुरान्तरवर्तिनो वानरा व्यवहारमपि न कुर्वते। तथाच समाजसंघटनं यद्यभिलषितम्, तर्हि अन्ततो गत्वा विवाहमात्रेऽवान्तरविभागपरिपालनमेव योग्यम्। इदानीं हि समाजान्तरबहिष्कृतस्य समा

जान्तरेणावलम्बदानात् विवाहादिसम्बन्धकरणेन सर्वेऽपि प्रायेण स्वपितरमपि तृणाय मन्यन्ते, इति विवाहेऽवान्तरविभागपरिपालने दृष्टं प्रयोजनमेकं वर्तत एव। विवाहेऽवान्तरविभागपरित्यागेन हि बहूनि द्वाराणि संकरायप्रवर्तितानि भवेयुः। इदानीमेकार्षिवंश्यत्वेन, ब्राह्मणानामन्तरम्, कालान्तरे द्विजत्वेन त्रैवर्णिकानाम्, ततो वर्णत्वेन ब्रह्मक्षत्रविट्छूद्राणाम्, अथ मानवत्वेन सर्वजातीनाम्, अथो स्त्रीत्वेन पुरुषत्वेन च सर्वेषां यौनसम्बन्ध इति कल्पनेन हि सर्वः स्वतन्त्रो भवितेति समाजशैथिल्यमपरिहरणीयां दशामेवाप्नुयात्, इति विवाहेऽवान्तरविभागपरिपालनमत्यावश्यकमेव।

अत्रान्यथाकरणे शास्त्रविरोधो वर्तते वा न वेति विचारे त्वस्माकमिदमेव वक्तव्यम्—यदनादिसिद्धाचाराख्यशास्त्रविरोधो वर्तत इति सर्वविदितमिदम्; अन्यथाहि विचारविषयतैव न स्यात्। ततश्च—

शिखा पुण्ड्रं च सूत्रं च समयाचारमेव च।
पूर्वैराचरितं कुर्यादन्यथा पतितो भवेत्॥

इति स्मरणेन—

देशजातिकुलाचारधर्माः सम्यक् प्रकीर्तिताः।
तथैव ते पालनीया धर्मः प्रक्षुभ्यतेऽन्यथा॥

इति वचनानुसारेण चावान्तरविभागपरिपालनं यौनसम्बन्धेऽत्यन्तमेवोचितम्। अधिकं चात्र वक्तव्यं पूर्वमेव विवेचितम्।

सदृशकुलविशेषेणैव विवाहः कुलविशेषस्येत्यपि कुलाचार एव। न ह्यन्यथा तत्तत्कुलाचाराणां विना संकरं परिपालनं स्यात्, इति कुलाचारसाङ्कर्यपरिहारोऽप्यपरो निमित्तमुक्तावान्तरविभागव्यवस्थायाः।

अत्रेयं विचारत्रयी—यत्तु केचिदेकपङ्क्तिभोजनवतां मिथः कन्यासम्बन्धो योग्य इति वावदूकाः, किमत्र न्याय्यम्? एकपङ्क्ति-

भोजनेन मिथः कन्यासम्बन्धः, उत कन्यासम्बन्धाभावात् पङ्क्ति-विच्छेदः ? पश्यतु भवान्, एकपङ्क्तिभोजनवत्सु पशुपक्ष्यादिषु किं मिथः शरीरसम्बन्धः ? अहो यत्पशुभिरपि समानजातिः प्रा-र्थ्यते, मनुष्यैस्तु निरस्यते। तस्मादिदमत्र न्याय्यम्—कन्यासम्ब-न्धाभावात् पङ्क्तिविच्छेद इति। "यथा कन्या तथा हविः" इति वचनं चात्रानुकूलम्। मिथः पङ्क्तिव्यवहारे जातिविस्मरणप्रसङ्गात् जातिविस्मृतौ मिथः कन्यासम्बन्धप्रसङ्गात् अश्वतरादिवद्वैरूप्यप्र-सङ्गात् सन्ततिविच्छेदापत्तिप्रसङ्गात् संकरजातेरन्यस्या उपाङ्गीकार प्रसङ्गाच्च। तस्मात्प्राचीनं व्यवहारं समूलं संस्मृत्य स्थापयतु भवान्, येन युद्धेः साफल्यं स्यात्। किं नास्ति त्वन्निकटे तादृशा-स्तर्कौ येन प्राचीनव्यवहारः समञ्जसो दृश्यते, येन भवत्पूर्वजा मन्वेषुः। एतत्सर्वेऽपि जानन्ति—यदन्तरङ्गजनतोषणं परिरक्षज-नपोषणं नवीनजनशिक्षणं प्राचीनपथपर्यटनं पथ्यमिति। नवीनमार्गः पारं गमिष्यतीति न निश्चयः। यतः परोक्ष उत्तरो देशोऽनन्तः। अतो नवीनेनापि बुद्धिमता प्राचीनः पन्था रक्ष्यो यथायथम्, तत्रैव लाघवात्। इति।

तथाच स्कान्दे धर्मारण्यकाण्डे आचारभेदात् "परस्परं न विवाहश्चातुर्विद्य-त्रिविद्ययोरि" ति निरूपणादाचारभेदोऽप्यवान्तरविभागस्य विवाहे परिपाल्यमानस्य मूलमिति ज्ञाप्यते। अत एव—

"कियत्काले गते तेषां विरोधः समपद्यत।
भिन्नाचारा भिन्नभाषा वेशसंशयमागताः।
भोजनाच्छादने राजन् परित्यक्ता निजैर्जनैः।
न कोऽपि कन्यां विवहेत् संसर्गेण कदाचना।"

इति न केवलमाचारभेदः; किन्तु भाषा-वेषादिभेदा अप्यवान्तरविभागस्य मूलमिति तत्रैव प्रतिपादितमुपपद्यते। तथाच लघुससर्गरूपभोजन एव, न केवलं श्राद्धादौ, किन्तु साधारणेऽपि पृथक् संख्या येषां गौडानाम्, तत्राप्यवान्तराणां च परस्परम्, एवं द्राविडानां च, तदा कैव कथा गुरुतरसंसर्गे विवाहे गौड-द्राविडानामपि परस्परविवाहादिसंभवस्य?

अतो वयमिदमेवात्र वक्तुं शक्नुमः—यत् "यथा कन्या तथा हविः" इति वचनानुसारेण समयाचारो येष्ववान्तरविभागेषु श्राद्धादौ पित्रादिस्थाने वरणम्, तदुपभुक्तशेषस्य प्रसादतया ग्रहणं चानुवर्तते, अन्ततो गत्वा ओदनादिग्रहणम्, तेषामेव परस्परविवाहो योग्यः। तथाच देशान्तरगता भाषान्तरैः वेषान्तरैरपि च व्यवहरमाणा अपि तत्तत्समाजेन परीक्ष्य स्वसम्बन्धयोग्या एवेम इति यदि निर्णीयते, तर्हि तेषामापाततः आन्ध्राणां महाराष्ट्राणां द्राविडानां नागराणामपि वा तत्तदवान्तरविभागेषु विवाहो न दोषाय। सांप्रतं [redacted] देशान्तरेऽवस्थानमात्रेण स्वगृहे वेषसमुदाचारादिषु आन्ध्रान् महाराष्ट्रीयानेव ताननुकुर्वन्तश्च, बहव एव द्राविडा अन्ये च उपलभ्यन्ते, इति तैस्साकं द्राविडानामन्येषां च विवाहो नायोग्यः। एवं च श्राद्धभोजनादौ निमन्त्र्य-

मान्या अपि विवाहे परं नानुमन्यन्ते इति महती दुर्दशा द्राविडदेशे या वर्तते, तत्परिवर्तनमपि यथावश्यकं मन्यते गत्यन्तरं नास्तीति, तर्हि न दोषायैव ।

तदेवं सवर्णेष्ववान्तरविभागेषु यत्र न विरुद्धकुलाचाराः, परस्परविरुद्धस्मार्ताचारादयः, तथा परस्परनिन्दावेशभावापेपादयो वा सन्ति, तथा न परस्परभोज्यासनादिसमुदाचारो बहोः कालादनुवर्तते, तत्र विवाहसम्बन्धः पञ्चद्राविडाद्यवान्तरविभागेष्वपि न परस्परं समुचितः, अन्यथा तु स न दोषाय ।

कथं चाऽयं तत्तदवान्तरविभागान्तःपातीति परीक्षा तु समानाधीनैवेत्यपि नागरखण्ड एव विवेचितम् ।

काशीब्राह्मणमहासम्मेलनमध्यस्थानां व्यवस्थाऽप्यत्रानुसन्धानमर्हति । सा यथा—

> अवान्तरश्रेणीषु विवाहविषये विवाहे कुलपरीक्षणस्यावश्यकत्वात् सह्याद्रिखण्डादौ स्कान्दान्तर्गते अवान्तरजातिरक्षणस्यावश्यकत्वप्रतिपादनात् सह्याद्रिखण्डप्रामाण्यवादस्याप्युक्तत्वात्, नागरखण्डे बलीवर्दसमानोऽपि नागर एव महामान्य इति व्यवस्थापनाच्च गत्यन्तराभावस्य समाजानुमतत्वे सन्निकृष्टसमसमानाचारशीलावान्तरश्रेणीपरिग्रहस्य कर्त्तव्यत्वेऽपि सत्यां गतौ तत्तच्छ्रेणीसम्बन्धनियमपरित्यागः, गत्यन्तराभावेऽपि विप्रकृष्टश्रेण्यन्तरपरिग्रहश्च शास्त्राणामसम्मतत्वादननुमत एवेति मन्यते—इति ।

४।११।५८,
विन्ध्येश्वरशास्त्री,
हि० श्रीनिवासाचार्य,
श्रीशशिनाथ झा,

[illegible]तीर्थः,
नवद्वीपवासी ।
[illegible] रामानुजाचार्यः,
[illegible] ।

अथ विवाहे चतुर्थीकर्म किं तस्यैवांशः, उत कर्मान्तरमिति विचारणीयम्। सति चैवं विवाहः किमेकदिनसाध्यः, उत दिनचतुष्टयसाध्य इति प्रश्नोऽपि समाहितः स्यात्। अपरं चात्रालोचनीयम्—यच्चतुर्थीकर्मेदं किं वधूगृह एव कर्तव्यम्, उत स्वगृहे यथेच्छं वा। तेन तु वधूगृह एव दिनचतुष्टयं विवाहप्रथा सांप्रतिकी दक्षिणदेशीयानां नियता, उतानियतेति निर्णयः स्यात्।

तत्र प्रथमं सर्वाणि गृह्यसूत्राण्यत्र किमभिप्रयन्तीति समालोचयामः।

तत्रापस्तम्बगृह्यसूत्रे पञ्चमखण्डे चतुर्दश-पञ्चदश-षोडशसूत्राणि—"समाप्यैतमग्निमनुहरन्ति। नित्यः धार्यः" इति विवाहसमाप्त्यनन्तरमेवाग्नेर्धार्यस्य सिद्धिरिति वर्णनात् यावद्भिर्दिनैर्धार्याग्निसिद्धिः, तावन्ति दिनानि विवाहदिनानीति ज्ञायते। तत्र विवाहाग्नेर्धार्याग्नित्वसिद्धिः—

"यस्मिन्नह्नि विवाहः स्यात् सायमारभ्य तस्य तु।
परिचर्या विवाहाग्नेर्विदधीत स्वयं द्विजः॥
यदि रात्रौ विवाहाग्निरुत्पन्नः स्यात्तथा सति।
उपक्रम्योत्तरस्याह्नः सायं परिचरेदमुम्॥
रात्रौ विवाह उत्पन्ने कथं कुर्वन्ति याज्ञिकाः।
रात्रावतीतकालश्चेत् श्वः सायं तदुपक्रमः॥
"प्रातर्होमे संगवान्तः कालस्त्वनुदितेऽथवा।
सायमस्तमिते होमः कालस्तु नव नाडिकाः॥

इति शौनकादिवचनात् एकेनैव दिनेनाग्निर्धारणीयः, यदि कन्या रजस्वला न भवति; अन्यथा त्रिरात्रानन्तरमेवाग्निः साधनीयः। ततश्च प्रथमदिनसायंकालेनैव विवाहसमाप्तिः, चतुर्थीकर्म तु कर्मान्तरमिति प्रतिभाति। वधूप्रवेशानन्तरसाध्यं हि चतुर्थीकर्म न वधूगृहे भवितुमर्हति, किन्तु पतिगृह एव। किञ्चाग्निपरिचर्यायां

दम्पत्योरेवाधिकारात् अग्निपरिचर्योपक्रमोऽपि विना दाम्पत्यं न भवितुमर्हति । अतोऽपि प्रथमदिनेनैव विवाहसिद्धिः ।

परन्त्वस्मिन् पक्षे विद्यमानेष्वेव मन्त्रान्तरेषु—"आरोहोरुमि"ति मन्त्रमात्रस्य "शेषं समावेशने जपेत्" इति शेषशब्देन ग्रहणं चतुर्थीकर्मापि विवाहस्यांश इति ज्ञापयति । सति चैवं "समाप्यैनमि"ति सूत्रे तावदन्तांशं समाप्येति योजनैव साधयसी । तथाच पाणिग्रहणादिकमिव चतुर्थीकर्मापि विवाहांश एवेति केचित् ।

चतुर्थीकर्मेति नाम खलु त्रिरात्रब्रह्मचर्यपक्षेण, यदातु "अत ऊर्ध्वं त्रिरात्रम्, द्वादशरात्रं वा संवत्सरं वा" इत्याश्वलायनसूत्रेण द्वादशरात्रादिब्रह्मचर्यपक्षः, तदा तु न चतुर्थीकर्म, किन्तु त्रयोदश्यादिकमेव तस्य नाम ; तेष्वेव दिनेषु समावेशनस्य संभवात् । एवं चात्र त्रिरात्रपक्षस्यैव स्वीकरणीयत्वात् चतुर्थीकर्मेति नाम्ना तस्य व्यवहारः । तत्र प्रथमस्य व्रतसमाप्त्यनन्तरस्य समावेशनस्य केवलमदृष्टार्थत्वम्, ऋत्वनन्तरप्रथमसमावेशनस्यैव दृष्टार्थत्वमित्यादिविशेषोऽपि सर्वैरनुसन्धेयः । सति चैवम्—

"दम्पती रोहिणी-सोमौ भूत्वा प्रथमके दिने ।
दाक्षायणीं यजेयातां द्वितीये दिवसेऽपि तौ ॥
पूजयेतां महादेवीं गन्धर्वाप्सरसौ च तौ ।
अग्नि-स्वाहे तृतीयेऽह्नि पूजयेतां च कालिकाम् ॥
चतुर्थ्यां तौ यजेयेतां शाङ्करीं मानव-स्त्रियौ ।
एवं प्रतिदिनं कर्तुं पूजां तौ दम्पती तदा ॥
चतुर्ष्वेतेषु दिवसेष्वर्चयेतां द्विजान् स्वयम् ।
वस्त्र-होमादिमिष्टान्न-ताम्बूलादिप्रदानतः ॥
आशीर्वादैर्बहुविधैश्चतुर्वेदोदितैर्द्विजैः ॥

इति वीरमित्रोदयोद्धृतशौनकवचनानुसारेण विवाहोत्सवस्य दिनचतुष्टयं संपादनं त्रिरात्रव्रताङ्गमेव, न विवाहाङ्गम् ।

"चतुर्थ्यां निशायां हुते पक्वहोमे व्रतं विसृज्य दण्डमुत्थापयति" इति बोधायनादिवचनेऽपि व्रतशेषत्वेनैव चतुर्थीकर्मणश्चतुर्थीकर्म-तया व्यवहारः, यतस्त्रिरात्रं ब्रह्मचर्यम्, चतुर्थ्यां समावेशनमित्यन-योरसङ्गतः समन्वयः। आपस्तम्बेन समावेशनं विहितम्, बोधाय-नेन तूपवेशनम्; उभयमप्यदृष्टार्थमेवेति न विशेषः। मतद्वयेऽपि पाणिग्रहणमात्रेण भार्यात्वसिद्धावपि रत्यर्थता व्रतसमापनं विना न संभवति। तत्राप्यन्ततो दिनत्रयं व्रतमपेक्षितम्। तथाच—"सोमः प्रथमो विविदे गन्धर्वो विविद उत्तरः। तृतीयो अग्निष्टे पतिस्तुरीयस्ते मनुष्यजाः।" इति मन्त्रलिङ्गेनाप्येकवाक्यता भवति। द्वादशरात्रादि-पक्षे तु प्रत्येकं रात्रित्रयं सोमादीनामुपभोगकालः, एवं संवत्सरव्रत-पक्षे मासत्रयमिति विभागोऽनुसन्धेयः। सर्वथा तु पक्षान्तरे कल्प्या-र्थे व्रतदिनान्यपि विवाहदिनानि, इति न स्वीकर्तुं योग्यम्, इत्येके-नैव दिनेन विवाहः सिद्ध्यत्येव। व्रतं तु वधूप्रवेशं वरगृहे कार-यित्वा वरगृहेऽपि संपादयितुं शक्यते, न वधूगृह एव तत्र संपाद-नीयमिति नियमः।

वधूप्रवेशस्तु—

> "वधूप्रवेशः प्रथमे तृतीये शुभप्रदः पञ्चमकेऽथवा हि।
> द्वितीयके वाथ चतुर्थके षष्ठे वियोगामयदुःखदः स्यात्॥
> "आरभ्योद्वाहदिवसात् षष्ठे वाऽप्यष्टमे दिने।
> वधूप्रवेशः संपत्त्यै दशमेऽथ समे दिने॥"

इति गर्ग-नारदादिवचनानुसारेण प्रथमेऽपि दिने भवितु-मर्हत्येव। सुदूरविप्रकर्षेऽपि मध्येमार्गम् "ब्राह्मण्याश्च शूद्रायाः जीवपत्न्या जीवप्रजाया अगारे एतां रात्रिं वसेत्" इति यत्र कुत्रापि स्थानान्तरेऽपि वासो विधीयत एव। सांप्रतं तु शकट-नौकादिद्वारा-ऽतिविप्रकृष्टोऽपि देशो विनैवायासं प्राप्तुं शक्यत एवेति, न वधूगृह एवावस्थातव्यमिति नियमः। इदमेवानेनाभिप्रेयते—यदेकेनैव

दिनेन विवाहः सिद्ध्यति, चतुर्थी कर्म क्रियान्तरं व्रतशेषत्वात् अन्यत्रापि चतुर्थे दिने कर्तुं शक्यते। इदं तु सर्वथा हेयमेव—यदेकेन दिनेन विवाहमनुतिष्ठन्तस्तस्मिन्नेव दिने चतुर्थीकर्मापि समापयन्तीति।

अयं चाचारो नैकरात्रव्रतपक्षेऽपि सङ्गतो भवति। अस्मिन्नवसर इदमपि सूच्यते, यदेकरात्रव्रतपक्षोऽप्यशक्तविषये शास्त्रेणाभ्यनुज्ञायते। तथाच ब्रह्मपुराणम्—

कृते विवाहे वर्षं तु वस्तव्यं ब्रह्मचारिणा।
यद्यष्टवर्षा कन्या स्यात्, तथा तत्त्रिगुणः पुमान् ॥
अथ तद् द्वादशाहानि त्रिंशद्वर्षेण सर्वदा।
यदि द्वादशवर्षा स्यात् कन्या रूपगुणान्विता ॥
द्वात्रिंशद्वर्षपूर्णेन यदि षोडशवार्षिकी।
लब्धा तदा तु षड्रात्रं वस्तव्यं संयतेन तु ॥
विवाह्यब्दा यदा कन्या वस्तव्यं तत्र वै त्र्यहम्।
अत ऊर्ध्वमहोरात्रं वस्तव्यमिति संयतैः ॥” इति।

आपस्तम्बादयस्तु सर्वत्र त्रिरात्रपक्षमेव मन्यन्ते।

वयं तु मन्यामहे सांप्रतमेकरात्रव्रतपक्षस्यापि व्यवस्थापनेनान्ततो गत्वा दिनद्वयसाध्यो यदि विवाहोत्सवः क्रियते, तर्हि न दोषलेशोऽपि भवितेति। सांप्रतिकस्तु मुख्यः पक्षो व्रतस्य त्रिरात्रमेव भवितुमर्हतीति खलु आपस्तम्बादयो मन्यन्ते। सति चैवं गौणः पक्षोऽपि तैर्यथा मुख्यतया मन्यते, एवमस्माभिरपि कथं चैकरात्रव्रतपक्षोऽप्यन्ततो गौणपक्षतयापि ब्रह्मपुराणसिद्धो नाङ्गीकर्तुं शक्यते।

सर्वाणि गृह्यसूत्राण्यस्मिन् पक्षेऽनुगुणान्येव वर्तन्ते, यद् त्रिरात्रब्रह्मचर्यपक्षेणैव भार्यायाः स्पर्शतासंभव इति। सति

चैवम्—येषां रत्यर्थतानिषेधः शुद्धानामपि सगोत्रादीनाम्, रोगिण्यादीनां वा, तासामपि भार्यात्वं परं नापगतम्, नवा विवाहसंस्कारासंस्कृतत्वं चेति, तास्वपि चतुर्थीकर्मादृष्टार्थं कर्तव्यमेव, इति तस्या उद्ढायाः न पुनर्विवाहसंभवः; उपयुक्तप्रायत्वात्। एतदेवाभिप्रेत्य—"चतुर्थीमन्त्रमात्रेण त्वङ्मासहृदयेन्द्रियैः" ।

संयुज्यते च भर्त्रा सा" इति वचनं प्रवृत्तम्।

तदिदं सिद्धम्—यच्चतुर्थीकर्म न विवाहांशः,अंशत्वेऽपि एकरात्रव्रतपक्षेण द्वितीये दिन एव संपादयितुं शक्यते, इति न दिनचतुष्टयसाध्यत्वमेव वधूगृह एव विवाहस्येति पक्षः सभवद्युक्तिक इत्यापस्तम्बादिसम्मतो मार्गः। आश्वलायनादिसम्मतश्च विवाहस्य चतुर्थदिनसाध्यत्वमिति नियमो न साधुरित्येव। अयं पक्षस्तु नापस्तम्बादिनामपि सम्मतः। प्रथमदिनवधूप्रवेशो पुनर्वधूगृहं प्रत्यागत्यैव स्थातव्यमित्यत्र तु प्रमाणं मृग्यम्। अतः सांप्रतिको वधूगृह एव दिवसचतुष्टयमेव विवाहोत्सवः कर्तव्य इति समयो दाक्षिणात्यानां न धर्मज्ञसमयः, किन्तु तत्तद्वैयक्तिकसमय इति नयं समयाचारोऽपि, अतोऽस्य समुदाचारस्य परिवर्तनं व्यक्तिविशेषेण क्रियमाणं न शास्त्रविरुद्धमिति प्रतिभाति।

उदीच्यास्तु—एकेनैव दिनेन विवाहं साधयन्ति, वधूं च तस्मिन्नेव दिने वरगृहं चानयन्ति। महाराष्ट्रीया अपि प्रायेण दिवसद्वयेनैव विवाहं वधूगृहे सपादयन्ति। सति चैवं वधूगृह एव दिनचतुष्टयमपि विवाह इति समुदाचारः परिवर्त्यमानः, न केवलं लौकिकव्यवहारदृष्ट्या, किन्तु शास्त्रीयव्यवहारदृष्ट्यापि श्रेयस एव स्यादिति प्रतिभाति। अत्र यथासंभवं व्यवस्था स्वीकर्तव्या।

---

